कर्तव्यः । येन रेचकः कृतस्तेनैव पूरकः कर्तव्य इति भावः ॥ ९ ॥

**प्राणं चेदिडया पिबेन्नियमितं भूयोऽन्यया रेचये-**
**त्पीत्वा पिङ्गलया समीरणमथो बद्ध्वा त्यजेद्वामया ।**
**सूर्याचन्द्रमसोरनेन विधिनाऽभ्यासं सदा तन्वतां**
**शुद्धा नाडिगणा भवन्ति यमिनां मासत्रयादूर्ध्वतः ॥१०॥**

बद्धपद्मासन इत्याद्युक्तमर्थं पिण्डीकृत्यानुवदन् प्राणायामस्यावान्तरफलमाह—प्राणमिति । चेदिडया वामनाड्या प्राणं पिबेत्पूरयेत्तर्हि नियमितं कुम्भितं प्राणं भूयः पुनरन्यया पिङ्गलया रेचयेत् । पिङ्गलया दक्षनाड्या समीरणं वायुं पीत्वा पूरणानन्तरं बद्ध्वा कुम्भयित्वा वामयेडया त्यजेद्रेचयेत् । सूर्यश्च चन्द्रमाश्च सूर्याचन्द्रमसौ तयोः । 'देवताद्वन्द्वे च' इत्यानङ् । अनेनोक्तेन विधिना प्रकारेण सदा नित्यमभ्यासं चन्द्रेणापूर्य कुम्भयित्वा सूर्येण रेचयेत्सूर्येणापूर्य कुम्भयित्वा चन्द्रेण रेचयेदित्याकारकं तन्वतां विस्तारयतां यमिनां यमवतां नाडीगणा नाडीसमूहा मासत्रयादूर्ध्वतो मासानां त्रयं तस्मादुपरि शुद्धा मलरहिता भवन्ति ॥ १० ॥

**प्रातर्मध्यंदिने सायमर्धरात्रे च कुम्भकान् ।**
**शनैरशीतिपर्यन्तं चतुर्वारं समभ्यसेत् ॥ ११ ॥**

अथ प्राणायामाभ्यासकालं तदवधिं चाह—प्रातरिति। प्रातररुणोदयमारभ्य सूर्योदयाद्घटिकात्रयपर्यन्ते प्रातःकाले मध्यंदिने मध्याह्ने पञ्चधा विभक्तस्य दिनस्य मध्यभागे सायंसंध्या त्रिनाडीप्रमितार्कास्तादधस्तादूर्ध्वं चेत्युक्तलक्षणे संध्याकाले रात्रेरर्धमर्धरात्रं तस्मिन्नर्धरात्रे रात्रेर्मध्ये मुहूर्तद्वये च शनैरशीतिपर्यन्तमशीतिसंख्यावधि चतुर्वारं वारचतुष्टयम्। 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया। चतुर्षु कालेष्वेकैकस्मिन्कालेऽशीतिप्राणायामाः कार्याः। अर्धरात्रे कर्तुमशक्तश्चेत्त्रिसंध्यं कर्तव्या इति संप्रदायः। चतुर्वारं कृताश्चेद्दिने दिने (३२०) विंशत्यधिकशतत्रयपरिमिताः प्राणायामा भवन्ति। वारत्रयं कृताश्चेत् (२४०) चत्वारिंशदधिकशतद्वयपरिमिता भवन्ति ॥ ११ ॥

**कनीयसि भवेत्स्वेदः कम्पो भवति मध्यमे।**
**उत्तमे स्थानमाप्नोति ततो वायुं निबन्धयेत् ॥ १२ ॥**

कनिष्ठमध्यमोत्तमानां प्राणायामानां क्रमेण व्यापकविशेषमाह—कनीयसीति। कनीयसि कनिष्ठे प्राणायामे स्वेदः प्रस्वेदो भवेद्भवति। स्वेदानुमेयः कनिष्ठः। मध्यमे प्राणायामे कम्पो भवति। कम्पानुमेयो मध्यमः। उत्तमे प्राणायामे स्थानं ब्रह्मरन्ध्रमाप्नोति। स्थानप्राप्त्यनुमेय उत्तमः।

ततस्तस्माद्वायुं प्राणं निबन्धयेन्नितरां बन्धयेत् । कनिष्ठादीनां लक्षणमुक्तं लिङ्गपुराणे—" प्राणायामस्य मानं तु मात्राद्वादशकं स्मृतम् । नीचो द्वादशमात्रस्तु सकृदुद्धात ईरितः ॥ मध्यमस्तु द्विरुद्धातश्चतुर्विंशतिमात्रकः । मुख्यस्तु यस्त्रिरुद्धातः षट्त्रिंशन्मात्र उच्यते ॥ प्रस्वेदकम्पनोत्थानजनकश्च यथाक्रमम् । आनन्दो जायते चात्र निद्रा धूमस्तथैव च ॥ रोमाञ्चो ध्वनिसंविञ्शिरङ्गमोटनकम्पनम् । श्रवणस्वेदजल्पाद्यं संविन्मूर्च्छां जयेद्यदा । तदोत्तम इति प्रोक्तः प्राणायामः सुशोभनः ॥ " इति । धूमश्चित्तान्दोलनम् । गोरक्षोऽपि—" अधमे द्वादश प्रोक्ता मध्यमे द्विगुणाः स्मृताः । उत्तमे त्रिगुणा मात्राः प्राणायामे द्विजोत्तमैः " । उद्धातलक्षणं तु—" प्राणेनोत्सार्यमाणेन अपानः पीड्यते यदा । गत्वा चोर्ध्वं निवर्तेत एतदुद्धातलक्षणम् ' । मात्रामाह याज्ञवल्क्यः—" अङ्गुष्ठाङ्गुलिमोक्षं त्रिस्त्रिर्जानुपरिमार्जनम् । तालत्रयमपि प्राज्ञा मात्रासंज्ञां प्रचक्षते " । स्कन्दपुराणे—" एकश्वासमयी मात्रा प्राणायामो निगद्यते " । एतद्व्याख्यातं योगचिन्तामणौ—' निद्रावशं गतस्य पुंसो यावता कालेनैकः श्वासो गच्छत्यागच्छति च तावत्कालः प्राणायामस्य मात्रेत्युच्यते ' इति । अर्धश्वासाधिकद्वादशश्वासावच्छिन्नः कालः प्राणायामकालः । षड्भिः श्वासैरेकं पलं भवति । एवं च सार्धश्वासपलद्वयात्मकः

कालः प्राणायामकालः सिद्धः । सार्धद्वादशमात्रामितः प्राणायामो यः स एवोत्तमः प्राणायाम इत्युच्यते । न च पूर्वोदाहृतलिङ्गपुराणगोरक्षवाक्यविरोधः, तत्र द्वादशमात्रकस्य प्राणायामस्याधमत्वोक्तेरिति शङ्कनीयम् । "जानुं प्रदक्षिणीकुर्यान्न द्रुतं न विलम्बितम् । प्रदद्याच्छोटिकां यावत्तावन्मात्रेति गीयते" इति स्कन्दपुराणात् । "अङ्गुष्ठाङ्गुलिमोक्षं च जानोश्च परिमार्जनम् । प्रदद्याच्छोटिकां यावत्तावन्मात्रेति गीयते ॥" इति च स्कन्दपुराणात् । अङ्गुष्ठो मात्रा संख्यायते तदेति दत्तात्रेयवचनाच्च । लिङ्गपुराणगोरक्षादिवाक्येष्वेकच्छोटिकावच्छिन्नस्य कालस्य मात्रात्वेन विवक्षितत्वात् । याज्ञवल्क्यादिवाक्येषु च्छोटिकात्रयावच्छिन्नस्य कालस्य मात्रात्वेन विवक्षणात् त्रिगुणस्याधमस्योत्तमत्वं तत्राप्युक्तमित्यविरोधः । सर्वेषु योगसाधनेषु प्राणायामो मुख्यस्तत्सिद्धौ प्रत्याहारादीनां सिद्धेः, तदसिद्धौ प्रत्याहाराद्यसिद्धेश्च । वस्तुतस्तु प्राणायाम एव प्रत्याहारादिशब्दैर्निगद्यते । तथा चोक्तं योगचिन्तामणौ—'प्राणायाम एवाभ्यासक्रमेण वर्धमानः प्रत्याहारध्यानधारणासमाधिशब्दैरुच्यते' इति । तदुक्तं स्कन्दपुराणे — "प्राणायामद्विषट्केन प्रत्याहार उदाहृतः । प्रत्याहारद्विषट्केन धारणा परिकीर्तिता ॥ भवेदीश्वरसंगत्यै ध्यानं द्वादशधारणम् । ध्यानद्वादशकेनैव समाधिरभिधीयते ॥

यत्समाधौ परं ज्योतिरनन्तं स्वप्रकाशकम् । तस्मिन्दृष्टे क्रियाकाण्डयातायातं निवर्तते ॥" इति, तथा "धारणा पञ्चनाडीभिर्ध्यानं स्यात्षष्टिनाडिकम् । दिनद्वादशकेन स्यात्समाधिः प्राणसंयमात् ॥" इति च । गोरक्षादिभिरप्येवमेवोक्तम् । अत्रैवं व्यवस्था । किंचिदूनद्विचत्वारिंशद्विपलात्मकः कनिष्ठप्राणायामकालः । अयमेवैकच्छोटिकावच्छिन्नस्य कालस्य मात्रात्वविवक्षया द्वादशमात्रकः कालः । किंचिदूनचतुरशीतिविपलात्मको मध्यमप्राणायामकालः । अयमेकच्छोटिकावच्छिन्नस्य कालस्य मात्रात्वविवक्षया चतुर्विंशतिमात्रकः । पञ्चविंशत्युत्तरशतविपलात्मक उत्तमः प्राणायामकालः । अयमेकच्छोटिकावच्छिन्नस्य कालस्य मात्रात्वविवक्षया षट्त्रिंशन्मात्रकः कालः । छोटिकात्रयावच्छिन्नस्य कालस्य मात्रात्वविवक्षया तु द्वादशमात्रक एव । बन्धपूर्वकं पञ्चविंशत्युत्तरशतविपलपर्यन्तं यदा प्राणायामस्थैर्यं भवति, तदा प्राणो ब्रह्मरन्ध्रं गच्छति । ब्रह्मरन्ध्रं गतः प्राणो यदा पञ्चविंशतिपलपर्यन्तं तिष्ठति तदा प्रत्याहारः । यदा पञ्चघटिकापर्यन्तं तिष्ठति तदा धारणा । यदा षष्टिघटिकापर्यन्तं तिष्ठति तदा ध्यानम् । यदा द्वादशदिनपर्यन्तं तिष्ठति तदा समाधिर्भवतीति सर्वं रमणीयम् ॥१२॥

**जलेन श्रमजातेन गात्रमर्दनमाचरेत् ।**
**दृढता लघुता चैव तेन गात्रस्य जायते ॥ १३ ॥**

प्राणायामानभ्यसतः स्वेदे जाते विशेषमाह—जलेनेति। श्रमात्प्राणायामाभ्यासश्रमाज्जातं तेन जलेन प्रस्वेदेन गात्रस्य शरीरस्य मर्दनं तैलाभ्यङ्गवदाचरेत्कुर्यात्। तेन मर्दनेन गात्रस्य दृढता दार्ढ्यं लघुता जाड्याभावो जायते प्रादुर्भवति ॥ १३ ॥

**अभ्यासकाले प्रथमे शस्तं क्षीराज्यभोजनम्।**
**ततोऽभ्यासे दृढीभूते न तादृङ् नियमग्रहः॥ १४ ॥**

अथ प्रथमोत्तराभ्यासयोः क्षीरादिनियमानाह—अभ्यासकाल इति। क्षीरं दुग्धमाज्यं घृतं तद्युक्तं भोजनं क्षीराज्यभोजनम्। शाकपार्थिवादिवत्समासः। केवले कुम्भके सिद्धेऽभ्यासो दृढो भवति। स्पष्टमन्यत् ॥ १४ ॥

**यथा सिंहो गजो व्याघ्रो भवेद्वश्यः शनैः शनैः।**
**तथैव सेवितो वायुरन्यथा हन्ति साधकम् ॥ १५ ॥**

सिंहादिवच्छनैरेव प्राणं वशयेन्न सहसेत्याह—यथेति। यथा येन प्रकारेण सिंहो मृगेन्द्रो गजो वनहस्ती व्याघ्रः शार्दूलः शनैः शनैरेव वश्यः स्वाधीनो भवेन्न सहसा यथैव तेनैव प्रकारेण सेवितोऽभ्यस्तो वायुः प्राणो वश्यो भवेत्। अन्यथा सहसा गृह्यमाणः साधकमभ्यासिनं हन्ति सिंहादिवत् ॥ १५ ॥

यत्समाधौ परं ज्योतिरनन्तं स्वप्रकाशकम् । तस्मिन्दृष्टे क्रियाकाण्डयातायातं निवर्तते ॥" इति, तथा "धारणा पञ्चनाडीभिर्ध्यानं स्यात्षष्टिनाडिकम् । दिनद्वादशकेन स्यात्समाधिः प्राणसंयमात् ॥" इति च । गोरक्षादिभिरप्येवमेवोक्तम् । अत्रैवं व्यवस्था । किंचिदूनद्विचत्वारिंशद्विपलात्मकः कनिष्ठप्राणायामकालः । अयमेवैकच्छोटिकावच्छिन्नस्य कालस्य मात्रात्वविवक्षया द्वादशमात्रकः कालः । किंचिदूनचतुरशीतिविपलात्मको मध्यमप्राणायामकालः । अयमेकच्छोटिकावच्छिन्नस्य कालस्य मात्रात्वविवक्षया चतुर्विंशतिमात्रकः । पञ्चविंशत्युत्तरशतविपलात्मक उत्तमः प्राणायामकालः । अयमेकच्छोटिकावच्छिन्नस्य कालस्य मात्रात्वविवक्षया षट्त्रिंशन्मात्रकः कालः । छोटिकात्रयावच्छिन्नस्य कालस्य मात्रात्वविवक्षया तु द्वादशमात्रक एव । बन्धपूर्वकं पञ्चविंशत्युत्तरशतविपलपर्यन्तं यदा प्राणायामस्थैर्यं भवति, तदा प्राणो ब्रह्मरन्ध्रं गच्छति । ब्रह्मरन्ध्रं गतः प्राणो यदा पञ्चविंशतिपलपर्यन्तं तिष्ठति तदा प्रत्याहारः । यदा पञ्चघटिकापर्यन्तं तिष्ठति तदा धारणा । यदा षष्टिघटिकापर्यन्तं तिष्ठति तदा ध्यानम् । यदा द्वादशदिनपर्यन्तं तिष्ठति तदा समाधिर्भवतीति सर्वं रमणीयम् ॥१२॥

**जलेन श्रमजातेन गात्रमर्दनमाचरेत् ।**
**दृढता लघुता चैव तेन गात्रस्य जायते ॥ १३ ॥**

प्राणायामानभ्यसतः स्वेदे जाते विशेषमाह—जलेनेति। श्रमात्प्राणायामाभ्यासश्रमाज्जातं तेन जलेन प्रस्वेदेन गात्रस्य शरीरस्य मर्दनं तैलाभ्यङ्गवदाचरेत्कुर्यात्। तेन मर्दनेन गात्रस्य दृढता दार्ढ्यं लघुता जाड्याभावो जायते प्रादुर्भवति ॥ १३ ॥

**अभ्यासकाले प्रथमे शस्तं क्षीराज्यभोजनम्।**
**ततोऽभ्यासे दृढीभूते न तादृङ् नियमग्रहः॥ १४ ॥**

अथ प्रथमोत्तराभ्यासयोः क्षीरादिनियमानाह—अभ्यासकाल इति। क्षीरं दुग्धमाज्यं घृतं तद्युक्तं भोजनं क्षीराज्यभोजनम्। शाकपार्थिवादिवत्समासः। केवले कुम्भके सिद्धेऽभ्यासो दृढो भवति। स्पष्टमन्यत् ॥ १४ ॥

**यथा सिंहो गजो व्याघ्रो भवेद्वश्यः शनैः शनैः।**
**तथैव सेवितो वायुरन्यथा हन्ति साधकम् ॥ १५ ॥**

सिंहादिवच्छनैरेव प्राणं वशयेन्न सहसेत्याह—यथेति। यथा येन प्रकारेण सिंहो मृगेन्द्रो गजो वनहस्ती व्याघ्रः शार्दूलः शनैः शनैरेव वश्यः स्वाधीनो भवेन्न सहसा यथैव तेनैव प्रकारेण सेवितोऽभ्यस्तो वायुः प्राणो वश्यो भवेत्। अन्यथा सहसा गृह्यमाणः साधकमभ्यासिनं हन्ति सिंहादिवत् ॥ १५ ॥

**प्राणायामेन युक्तेन सर्वरोगक्षयो भवेत् ।**
**अयुक्ताभ्यासयोगेन सर्वरोगसमुद्भवः ॥ १६ ॥**

युक्तायुक्तयोः फलमाह—प्राणायामेनेति । आहारादियुक्तिपूर्वको जालंधरादिबन्धयुक्तिविशिष्टः प्राणायामो युक्त इत्युच्यते । तेन सर्वरोगक्षयः सर्वेषां रोगाणां क्षयो नाशो भवेत् । अयुक्त उक्तयुक्तिरहितो योऽभ्यासस्तद्युक्तेन प्राणायामेन सर्वरोगसमुद्भवः सर्वेषां रोगाणां सम्यगुद्भव उत्पत्तिर्भवेत् ॥ १६ ॥

**हिक्का श्वासश्च कासश्च शिरःकर्णाक्षिवेदनाः ।**
**भवन्ति विविधा रोगाः पवनस्य प्रकोपतः ॥ १७ ॥**

अयुक्तेन प्राणायामेन के रोगा भवन्तीत्यपेक्षायामाह—हिक्केति । हिक्काश्वासकासा रोगविशेषाः । शिरश्च कर्णौ चाक्षिणी च शिरःकर्णाक्षि शिरःकर्णाक्षिणि वेदनाः शिरःकर्णाक्षिवेदनाः । विविधा नानाविधा रोगा ज्वरादयः । पवनस्य वायोः प्रकोपतो भवन्ति ॥ १७ ॥

**युक्तं युक्तं त्यजेद्वायुं युक्तं युक्तं च पूरयेत् ।**
**युक्तं युक्तं च बध्नीयादेवं सिद्धिमवाप्नुयात् ॥१८॥**

यतः पवनस्य प्रकोपतो विविधा रोगा भवन्त्यतः । युक्तं युक्तमिति । वायुं प्राणं युक्तं युक्तं त्यजेत् । रेचनकाले

शनैः शनैरेव रेचयेन्न वेगत इत्यर्थः। युक्तं युक्तं च न चाल्पं नाधिकं च पूरयेत्। युक्तं युक्तं च जालंधरबन्धादियुक्तं बध्नीयात्कुम्भयेत्। एवमभ्यसेच्चेत्सिद्धिं हठसिद्धिमवाप्नुयात् ॥ १८ ॥

**यदा तु नाडीशुद्धिः स्यात्तथा चिह्नानि बाह्यतः।**
**कायस्य कृशता कान्तिस्तदा जायेत निश्चितम् ॥**

युक्तं प्राणायाममभ्यसतो जायमानाया नाडीशुद्धेर्लक्षणमाह द्वाभ्याम्—यदा त्विति। यदा तु यस्मिन्काले तु नाडीनां शुद्धिर्मलराहित्यं स्यात्तदा बाह्यतो बाह्यानि। सार्वविभक्तिकस्तसिः। चिह्नानि लक्षणानि तथाशब्देनान्तराण्यपि चिह्नानि भवन्तीत्यर्थः। तान्येवाह—कायस्येति। कायस्य देहस्य कृशता कार्श्यं कान्तिः सुरुचिर्निश्चितं जायेत ॥ १९ ॥

**यथेष्टं धारणं वायोरनलस्य प्रदीपनम्।**
**नादाभिव्यक्तिरारोग्यं जायते नाडिशोधनात् ॥२०॥**

वायोः प्राणस्य यथेष्टं बहुवारं धारणं कुम्भकेषु। अनलस्य जठराग्नेः प्रदीपनं प्रकृष्टा दीप्तिर्नादस्य ध्वनेरभिव्यक्तिः प्राकट्यमारोग्यमारोगता नाडिशोधनान्नाडीनां शोधनान्मलराहित्याज्जायते ॥ २० ॥

**मेदःश्लेष्माधिकः पूर्वं षट् कर्माणि समाचरेत्।**
**अन्यस्तु नाचरेत्तानि दोषाणां समभावतः ॥ २१ ॥**

मेदआद्याधिक्ये उपायान्तरमाह—मेदःश्लेष्माधिक इति । मेदश्च श्लेष्मा च मेदःश्लेष्माणौ तावधिकौ यस्य स तादृशः पुरुषः । पूर्वं प्राणायामाभ्यासात्प्राङ् न तु प्राणायामाभ्यासकाले षट् कर्माणि वक्ष्यमाणानि समाचरेत्सम्यगाचरेत् । अन्यस्तु मेदःश्लेष्माधिक्यरहितस्तु तानि षट् कर्माणि नाचरेत् । तत्र हेतुमाह—दोषाणां वातपित्तकफानां समस्य भावः समभावः समत्वं तस्माद्दोषाणां समत्वादित्यर्थः ॥ २१ ॥

**धौतिर्बस्तिस्तथा नेतिस्त्राटकं नौलिकं तथा ।**
**कपालभातिश्चैतानि षट् कर्माणि प्रचक्षते ॥ २२ ॥**

षट्कर्माण्युपदिशति—धौतिरिति । स्पष्टम् ॥ २२ ॥

**कर्मषट्कमिदं गोप्यं घटशोधनकारकम् ।**
**विचित्रगुणसंधायि पूज्यते योगिपुंगवैः ॥ २३ ॥**

इदं रहस्यमित्याह—कर्मषट्कमिति । घटस्य शरीरस्य शोधनं मलापनयनं करोतीति घटशोधनकारकमिदमुद्दिष्टं कर्मणां षट्कं धौत्यादिकं गोप्यं गोपनीयम् । यतः । विचित्रगुणसंधायीति । विचित्रं विलक्षणं गुणं षट्कर्मरूपं संधातुं कर्तुं शीलमस्येति विचित्रगुणसंधायि योगिपुंगवैर्योगिश्रेष्ठैः पूज्यते सत्क्रियते । गोपनाभावे तु षट्कर्मकमन्यैरपि विहितं स्यादिति योगिनः पूज्यत्वाभावः प्रसज्येतेति भावः । एतेनेदमेव कर्म-

षट्कस्य मुख्यं फलमिति सूचितम्, मेदःश्लेष्मादिनाशस्य प्राणायामैरपि संभवात्। तदुक्तम्—'षट्कर्मयोगमाप्नोति पवनाभ्यासतत्परः' इति, पूर्वोत्तरग्रन्थस्याप्येवमेव स्वारस्याच्च ॥२३॥

**तत्र धौतिः—**

**चतुरङ्गुलविस्तारं हस्तपञ्चदशायतम्।**
**गुरूपदिष्टमार्गेण सिक्तं वस्त्रं शनैर्ग्रसेत्।**
**पुनः प्रत्याहरेच्चैतदुदितं धौतिकर्म तत् ॥ २४ ॥**

धौतिकर्माह—चतुरङ्गुलेति। चतुर्णामङ्गुलानां समाहारश्चतुरङ्गुलं विस्तारो यस्य तादृशं हस्तानां पञ्चदशैरायतं दीर्घं सिक्तं जलार्द्रं किंचिदुष्णं वस्त्रं पटं तच्च सूक्ष्मं नूतनोष्णीषादेः खण्डं ग्राह्यम्। गुरुणोपदिष्टो यो मार्गो वस्त्रग्रसनप्रकारस्तेन शनैर्मन्दं मन्दं किंचित्किंचिद् ग्रसेत्। द्वितीये दिने हस्तद्वयं तृतीये दिने हस्तत्रयम्। एवं दिनवृद्ध्या हस्तमात्रमधिकं ग्रसेत्। तस्य प्रान्तं राजदन्तमध्ये हठे संलग्नं कृत्वा नौलिकर्मणोदरस्थवस्त्रं सम्यक् चालयित्वा। पुनः शनैः प्रत्याहरेच्च तद्वस्त्रमुद्गिरेन्निष्कासयेच्च। तद्धौतिकर्मोदितं कथितं सिद्धैः ॥ २४ ॥

**कासश्वासप्लीहकुष्ठं कफरोगाश्च विंशतिः।**
**धौतिकर्मप्रभावेण प्रयान्त्येव न संशयः ॥ २५ ॥**

धौतिकर्मणः फलमाह—कासश्वासेति । कासश्च श्वासश्च प्लीहश्च कुष्ठं च । समाहारद्वन्द्वः । कासादयो रोगविशेषाः विंशतिसंख्याकाः कफरोगाश्च धौतिकर्मणः प्रभावेण गच्छन्त्येव न संशयः, निश्चितमेतदित्यर्थः ॥ २५ ॥

**नाभिदघ्नजले पायौ न्यस्तनालोत्कटासनः ।**
**आधाराकुञ्चनं कुर्यात्क्षालनं वस्तिकर्म तत् ॥ २६ ॥**

अथ वस्तिकर्माह—नाभिदघ्नेति । नाभिपरिमाणं नाभिदघ्नम् । परिमाणे दघ्नच् प्रत्ययः । तस्मिन्नाभिदघ्ने नाभिपरिमाणे जले नद्यादितोये पायुर्गुदं तस्मिन्न्यस्तो नालो वंशनालो येन कनिष्ठिकाप्रवेशयोग्यरन्ध्रयुक्तं षडङ्गुलदीर्घं वंशनालं गृहीत्वा चतुरङ्गुलं पायौ प्रवेशयेत् । अङ्गुलिद्वयमितं बहिः स्थापयेत् । उत्कटमासनं यस्य स उत्कटासनः । पार्ष्णिद्वये स्फिचौ विन्यस्य पादाङ्गुलिभिः स्थितिरुत्कटासनम् । आधारस्याकुञ्चनं यथा जलमन्तः प्रविशेत्तथा संकोचनं कुर्यात् । अन्तः प्रविष्टं जलं नौलिककर्मणा चालयित्वा त्यजेत् । क्षालनं वस्तिकर्मोच्यते । धौतिवस्तिकर्मद्वयं भोजनात्प्रागेव कर्तव्यम् । तदनन्तरं भोजने विलम्बोऽपि न कार्यः । केचित्तु पूर्वं मूलाधारेण वायोराकर्षणमभ्यस्य जले स्थित्वा पायौ नालप्रवेशनमन्तरेणैव वस्तिकर्माभ्यसन्ति । तथा करणे सर्वं जलं

बहिर्नायाति । अतो नानारोगधातुक्षयादिसंभवाच्च तथा वस्तिकर्म नैव विधेयम् । किमन्यथा स्वात्मारामः पायौ न्यस्तनाल इति ब्रूयात् ॥ २६ ॥

**गुल्मप्लीहोदरं चापि वातपित्तकफोद्भवाः ।**
**वस्तिकर्मप्रभावेण क्षीयन्ते सकलामयाः ॥ २७ ॥**

वस्तिकर्मगुणानाह द्वाभ्याम्——गुल्मप्लीहोदरमिति । गुल्मश्च प्लीहश्च रोगविशेषावुदरं जलोदरं च तेषां समाहारद्वन्द्वः । वातश्च पित्तं च कफश्च तेभ्य उद्भवा एकैकस्माद्द्वाभ्यां सर्वेभ्यो वा जाताः सकलाः सर्व आमया रोगा वस्तिकर्मणः प्रभावः सामर्थ्यं तेन क्षीयन्ते नश्यन्ति ॥ २७ ॥

**धात्विन्द्रियान्तःकरणप्रसादं**
**दद्याच्च कान्तिं दहनप्रदीप्तिम् ।**
**अशेषदोषोपचयं निहन्या-**
**दभ्यस्यमानं जलवस्तिकर्म ॥ २८ ॥**

धात्विति । अभ्यस्यमानमनुष्ठीयमानं जले वस्तिकर्म जलवस्तिकर्म कर्तृ दद्यादनुष्ठातुरिति शेषः । धातवः 'रसासृङ्मांसमेदोस्थिमज्जाशुक्राणि धातवः' इत्युक्ताः, इन्द्रियाणि वाक्पाणिपादपायूपस्थानि पञ्च कर्मेन्द्रियाणि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि पञ्च ज्ञानेन्द्रियाणि च, अन्तःकरणानि मनोबुद्धि-

चित्ताहंकाररूपाणि, तेषां परितापविक्षेपशोकमोहगौरवावरणदैन्यादिराजसतामसधर्मविनिवर्तनेन सुखप्रकाशलाघवादिसात्त्विकधर्माविर्भावः प्रसादस्तं कान्तिं द्युतिं दहनस्य जठराग्नेः प्रदीप्तिं प्रकृष्टां दीप्तिं च । तथा । अशेषाः समस्ता ये दोषा वातपित्तकफास्तेषामुपचयम् । एतदपचयस्याप्युपलक्षणम् । उपचयापचयौ निहन्यान्नितरां हन्यात् । दोषसाम्यरूपमारोग्यं कुर्यादित्यर्थः ॥ २८ ॥

**अथ नेतिः—**

**सूत्रं वितस्ति सुस्निग्धं नासानाले प्रवेशयेत् ।**
**मुखान्निर्गमयेच्चैषा नेतिः सिद्धैर्निगद्यते ॥ २९ ॥**

अथ नेतिकर्माह—सूत्रमिति । वितस्ति वितस्तिमितं वितस्तिरित्युपलक्षणमधिकस्यापि । यावता सूत्रेण सम्यङ् नेतिकर्म भवेत्तावद् ग्राह्यम् । सुस्निग्धं सुष्ठु स्निग्धं ग्रन्थ्यादिरहितं सूत्रम् । तच्च नवधा दशधा पञ्चदशधा वा गुणितं सुदृढं ग्राह्यम् । नासा नासिका सैव नालः सच्छिद्रत्वात्तस्मिन्प्रवेशयेत् । मुखान्निर्गमयेन्निष्कासयेत् । तत्प्रकारस्त्वेवम्—सूत्रप्रान्तं नासानाले प्रवेश्येतरनासापुटमङ्गुल्या निरुध्य पूरकं कुर्यात् । पुनश्च मुखेन रेचयेत् । पुनः पुनरेवं कुर्वतो मुखे सूत्रप्रान्तमायाति । तत्सूत्रप्रान्तं नासाबहिःस्थसूत्रप्रान्तं च

गृहीत्वा शनैश्चालयेदिति । चकारादेकस्मिन्नासानाले प्रवेश्येतरस्मिन्निर्गमयेदित्युक्तम् । तत्प्रकारस्त्वेकस्मिन्नासानाले सूत्रप्रान्तं प्रवेश्येतरनासापुटमङ्गुल्या निरुध्य पूरकं कुर्यात्पश्चादितरनासानालेन रेचयेत् । पुनः पुनरेवं कुर्वत इतरनासानाले सूत्रप्रान्तमायाति । तस्य पूर्ववच्चालनं कुर्यादिति । अयं प्रकारस्तु बहुवारं कुर्वतः कदाचिद्भवति । एषोक्ता सिद्धैरणिमादिगुणसंपन्नैः । तदुक्तम्—"अवाप्ताष्टगुणैश्वर्याः सिद्धाः सद्भिर्निरूपिताः" इति । नेतिर्निगद्यते नेतिरिति कथ्यते ॥ २९ ॥

**कपालशोधिनी चैव दिव्यदृष्टिप्रदायिनी ।**
**जत्रूर्ध्वजातरोगौघं नेतिराशु निहन्ति च ॥ ३० ॥**

नेतिगुणानाह—कपालशोधिनीति । कपालं शोधयति शुद्धं मलरहितं करोतीति कपालशोधिनी । चकारान्नासानालादीनामपि । एवशब्दोऽवधारणे । दिव्यां सूक्ष्मपदार्थग्राहिणीं दृष्टिं प्रकर्षेण ददातीति दिव्यदृष्टिप्रदायिनी नेतिक्रिया । जत्रुणोः स्कन्धसंध्योरूर्ध्वमुपरिभागे जातो जत्रूर्ध्वजातः, स चासौ रोगाणामोघश्च तमाशु झटिति निहन्ति—चकारः पादपूरणे । 'स्कन्धो भुजशिरोंऽसोऽस्त्री संधी तस्यैव जत्रुणी' इत्यमरः ॥ ३० ॥

चित्ताहंकाररूपाणि, तेषां परितापविक्षेपशोकमोहगौरवावरण-दैन्यादिराजसतामसधर्मविनिवर्तनेन सुखप्रकाशलाघवादिसात्त्विक-धर्माविर्भावः प्रसादस्तं कान्ति द्युतिं दहनस्य जठराग्नेः प्रदीप्तिं प्रकृष्टां दीप्तिं च । तथा । अशेषाः समस्ता ये दोषा वातपित्तकफास्तेषामुपचयम् । एतदपचयस्याप्युपलक्षणम् । उपचयापचयौ निहन्यान्नितरां हन्यात् । दोषसाम्यरूपमारोग्यं कुर्यादित्यर्थः ॥ २८ ॥

**अथ नेतिः—**

**सूत्रं वितस्ति सुस्निग्धं नासानाले प्रवेशयेत् ।**
**मुखान्निर्गमयेच्चैषा नेतिः सिद्धैर्निगद्यते ॥ २९ ॥**

अथ नेतिकर्माह—सूत्रमिति । वितस्ति वितस्तिमितं वितस्तिरित्युपलक्षणमधिकस्यापि । यावता सूत्रेण सम्यङ् नेतिकर्म भवेत्तावद् ग्राह्यम् । सुस्निग्धं सुष्ठु स्निग्धं ग्रन्थ्यादि-रहितं सूत्रम् । तच्च नवधा दशधा पञ्चदशधा वा गुणितं सुदृढं ग्राह्यम् । नासा नासिका सैव नालः सच्छिद्रत्वा-त्तस्मिन्प्रवेशयेत् । मुखान्निर्गमयेन्निष्कासयेत् । तत्प्रकारस्त्वेवम्—सूत्रप्रान्तं नासानाले प्रवेश्येतरनासापुटमङ्गुल्या निरुध्य पूरकं कुर्यात् । पुनश्च मुखेन रेचयेत् । पुनः पुनरेवं कुर्वतो मुखे सूत्रप्रान्तमायाति । तत्सूत्रप्रान्तं नासाबहिःस्थसूत्रप्रान्तं च

गृहीत्वा शनैश्चालयेदिति । चकारादेकस्मिन्नासानाले प्रवेश्येतरस्मिन्निर्गमयेदित्युक्तम् । तत्प्रकारस्त्वेकस्मिन्नासानाले सूत्रप्रान्तं प्रवेश्येतरनासापुटमङ्गुल्या निरुध्य पूरकं कुर्यात्पश्चादितरनासानालेन रेचयेत् । पुनः पुनरेवं कुर्वत इतरनासानाले सूत्रप्रान्तमायाति । तस्य पूर्ववच्चालनं कुर्यादिति । अयं प्रकारस्तु बहुवारं कुर्वतः कदाचिद्भवति । एषोक्ता सिद्धैरणिमादिगुणसंपन्नैः । तदुक्तम्—" अवाप्ताष्टगुणैश्वर्याः सिद्धाः सद्भिर्निरूपिताः " इति । नेतिर्निगद्यते नेतिरिति कथ्यते ॥ २९ ॥

**कपालशोधिनी चैव दिव्यदृष्टिप्रदायिनी ।**
**जत्रूर्ध्वजातरोगौघं नेतिराशु निहन्ति च ॥ ३० ॥**

नेतिगुणानाह—कपालशोधिनीति । कपालं शोधयति शुद्धं मलरहितं करोतीति कपालशोधिनी । चकारान्नासानालादीनामपि । एवशब्दोऽवधारणे । दिव्यां सूक्ष्मपदार्थग्राहिणीं दृष्टिं प्रकर्षेण ददातीति दिव्यदृष्टिप्रदायिनी नेतिक्रिया । जत्रुणोः स्कन्धसंध्योरूर्ध्वमुपरिभागे जातो जत्रूर्ध्वजातः, स चासौ रोगाणामोघश्च तमाशु झटिति निहन्ति—चकारः पादपूरणे । 'स्कन्धो भुजशिरोऽसोऽस्त्री संधी तस्यैव जत्रुणी' इत्यमरः ॥ ३० ॥

अथ त्राटकम्—

**निरीक्षेन्निश्चलदृशा सूक्ष्मलक्ष्यं समाहितः ।**
**अश्रुसंपातपर्यन्तमाचार्यैस्त्राटकं स्मृतम् ॥ ३१ ॥**

त्राटकमाह—निरीक्षेदिति । समाहितः एकाग्रचित्तः निश्चला चासौ दृक् च दृष्टिस्तया सूक्ष्मं च तल्लक्ष्यं च सूक्ष्मलक्ष्यमश्रूणां सम्यक् पातः पतनं तत्पर्यन्तम् । अनेन निरीक्षणस्यावधिरुक्तः । निरीक्षेत्पश्येत् । आचार्यैर्मत्स्येन्द्रादिभिरिदं त्राटकं त्राटककर्म स्मृतं कथितम् ॥ ३१ ॥

**मोचनं नेत्ररोगाणां तन्द्रादीनां कपाटकम् ।**
**यत्नतस्त्राटकं गोप्यं यथा हाटकपेटकम् ॥ ३२ ॥**

त्राटकगुणानाह—मोचनमिति । नेत्रस्य रोगा नेत्ररोगास्तेषां मोचनं नाशकम्, तन्द्रा आदिर्येषामालस्यादीनां तेषां कपाटकं कपाटवदन्तर्धायकमभिभावकमित्यर्थः । तन्द्रा तामसश्चित्तवृत्तिविशेषः । त्राटकं त्राटकाख्यं कर्म यत्नतः प्रयत्नतः प्रयत्नाद्गोप्यं गोपनीयम् । गोपने दृष्टान्तमाह—यथेति । हाटकस्य सुवर्णस्य पेटकं पेटी इति लोके प्रसिद्धं यथा येन प्रकारेण गोप्यते तद्वत् ॥ ३२ ॥

**अथ नौलिः—**

**अमन्दावर्तवेगेन तुन्दं सव्यापसव्यतः ।**
**नतांसो भ्रामयेदेषा नौलिः सिद्धैः प्रचक्ष्यते ॥३३॥**

नौलिकर्माह—अमन्देति । नतौ नम्रीभूतावंसौ स्कन्धौ यस्य स नतांसः पुमानमन्दोऽतिशयितो य आवर्तस्तस्येव जलभ्रमस्येव वेगो जवस्तेन तुन्दमुदरम् । 'पिचण्डकुक्षी जठरोदरं तुन्दं स्तनौ कुचौ' इत्यमरः । सव्यं चापसव्यं च सव्यापसव्ये दक्षिणवामभागौ तयोः सव्यापसव्यतः । सप्तम्यर्थे तसिः । भ्रामयेद् भ्रमन्तं प्रेरयेत् । सिद्धैरेषा नौलिः प्रचक्ष्यते कथ्यते ॥ ३३ ॥

**मन्दाग्निसंदीपनपाचनादि-**
**संधापिकाऽऽनन्दकरी सदैव ।**
**अशेषदोषामयशोषणी च**
**हठक्रियामौलिरियं च नौलिः ॥ ३४ ॥**

नौलिगुणानाह—मन्दाग्नीति । मन्दश्चासावग्निर्जठराग्निस्तस्य संदीपनं सम्यग् दीपनं च पाचनं च भुक्तान्नपरिपाकश्च मन्दाग्निसंदीपनपाचने ते आदिनी यस्य तन्मन्दाग्निसंदीपनपाचनादि तस्य संधापिका विधात्री । आदिशब्देन मलशुद्ध्यादि । सदैव सर्वदैवानन्दकरी सुखकरी । अशेषाः

समस्ताश्च ते दोषाश्च वातादय आमयाश्च रोगास्तेषां शोषणी शोषणकर्त्री हठस्य क्रियाणां धौत्यादीनां मौलिर्मौलिरिवोत्तमा धौतिवस्त्योर्नौलिसापेक्षत्वात् । इयमुक्ता नौलिः ॥ ३४ ॥

**भस्त्रावल्लोहकारस्य रेचपूरौ ससंभ्रमौ ।**
**कपालभातिर्विख्याता कफदोषविशोषणी ॥ ३५ ॥**

कपालभातिं तद्गुणं चाह—भस्त्रावदिति । लोहकारस्य भस्त्राऽग्नेर्धमनसाधनीभूतं चर्म तद्वत्संभ्रमेण सह वर्तमानौ ससंभ्रमावमन्दौ यौ रेचपूरौ रेचकपूरकौ कपालभातिरिति विख्याता । कीदृशी ? कफदोषविशोषणी । कफस्य दोषा विंशतिभेदभिन्नाः । तदुक्तं निदाने—'कफरोगाश्च विंशतिः' इति । तेषां विशोषणी विनाशिनी ॥ ३५ ॥

**षट्कर्मनिर्गतस्थौल्यकफदोषमलादिकः ।**
**प्राणायामं ततः कुर्यादनायासेन सिध्यति ॥ ३६ ॥**

षट्कर्मणां प्राणायामत्वोपकारकत्वमाह—षट्कर्मेति । षट्कर्मभिर्धौतिप्रभृतिभिर्निर्गताः । स्थौल्यं स्थूलस्य भावः स्थूलत्वम् । कफदोषा विंशतिसंख्याकाः, मलादयश्च यस्य स तथा । 'शेषाद्विभाषा' इति कप्रत्ययः । आदिशब्देन पित्तादयः । प्राणायामं कुर्यात् । ततस्तस्मात्षट्कर्मपूर्वकात्प्राणा-

ादनायासेनाश्रमेण सिध्यति योग इति शेषः । षट्कर्मा-
णे तु प्राणायामे श्रमाधिक्यं स्यादिति भावः ॥ ३६ ॥

**प्राणायामैरेव सर्वे प्रशुष्यन्ति मला इति ।**
**आचार्याणां तु केषांचिदन्यत्कर्म न संमतम् ॥३७॥**

मतभेदेन षट्कर्मणामनुपयोगमाह—प्राणायामैरिति । प्रा-
ामैरेव । एवशब्दः षट्कर्मव्यवच्छेदार्थः । सर्वे मलाः
ुष्यन्ति । मला इत्युपलक्षणं स्थौल्यकफपित्तादीनाम् । इति
ाः केषांचिदाचार्याणां याज्ञवल्क्यादीनामन्यत्कर्म षट्कर्म
संमतं नाभिमतम् । आचार्यलक्षणमुक्तं वायुपुराणे—
आचिनोति च शास्त्रार्थमाचारे स्थापयेदपि । स्वयमाचरते
ादाचार्यस्तेन चोच्यते ॥" इति ॥ ३७ ॥

**उदरगतपदार्थमुद्वमन्ति**
**पवनमपानमुदीर्य कण्ठनाले ।**
**क्रमपरिचयवश्यनाडिचक्रा**
**गजकरणीति निगद्यते हठज्ञैः ॥ ३८ ॥**

गजकरणीमाह—उदरगतमिति । अपानं पवनमपानवायुं
ठनाले कण्ठो नाल इव कण्ठनालस्तस्मिन्नुदीर्योत्क्षिप्योदरे
प्राप्तः स चासौ पदार्थश्च भुक्तपीतान्नजलादिस्तं
ोद्वमन्त्युद्गिरन्ति यया योगिन इत्यध्याहारः । क्रमेण

यः परिचयोऽभ्यासस्तेनावश्यं स्वाधीनं नाडीनां चक्रं यस्यां सा तथा । सा क्रिया हठज्ञैर्हठयोगाद्यभिज्ञैर्गजकरणीति निगद्यते कथ्यते । 'क्रमपरिचयवश्यनाडिमार्गा' इति क्वचित्पाठः । तस्यायमर्थः—क्रमपरिचयेन वश्यो नाड्याः शङ्खिन्या मार्गः कण्ठपर्यन्तो यस्यां सा तथा ॥ ३८ ॥

**ब्रह्मादयोऽपि त्रिदशाः पवनाभ्यासतत्पराः ।**
**अभूवन्नन्तकभयात्तस्मात्पवनमभ्यसेत् ॥ ३९ ॥**

प्राणायामोऽवश्यमभ्यसनीयः सर्वोत्तमैरभ्यस्तत्वान्महाफलत्वाच्चेति सूचयन्नाह चतुर्भिः—ब्रह्मादय इति । ब्रह्मा आदिर्येषां ते ब्रह्मादयस्तेऽपि किमुतान्य इत्यर्थः । त्रिदशा देवाः अन्तयतीत्यन्तकः कालस्तस्माद्भयमन्तकभयं तस्मात्पवनस्य प्राणवायोरभ्यासो रेचकपूरककुम्भकभेदभिन्नप्राणायामानुष्ठानरूपस्तस्मिंस्तत्परा अवहिता अभूवन्नासन् । तस्मात्पवनमभ्यसेत्प्राणमभ्यसेत् ॥ ३९ ॥

**यावद्बद्धो मरुद्देहे यावच्चित्तं निराकुलम् ।**
**यावद् दृष्टिर्भ्रुवोर्मध्ये तावत्कालभयं कुतः ॥ ४० ॥**

यावदिति । यावद्यावत्कालपर्यन्तं मरुत्प्राणानिलो देहे शरीरे बद्धः श्वासोच्छ्वासक्रियाशून्यः । यावच्चित्तमन्तःकरणं निराकुलमविक्षिप्तं समाहितम् । यावद्भ्रुवोर्मध्ये दृष्टिरन्तः-

करणवृत्तिः । दृशिरत्र ज्ञानसामान्यार्थः । तावत्कालपर्यन्तं कलयतीति कालोऽन्तकस्तस्माद्भयं कुतः न कुतोऽपीत्यर्थः । तथा च वक्ष्यति—"खाद्यते न च कालेन बाध्यते न च कर्मणा । साध्यते न स केनापि योगी युक्तः समाधिना ॥" इति । स्वाधीनो भवतीत्यर्थः ॥ ४० ॥

**विधिवत्प्राणसंयामैर्नाडीचक्रे विशोधिते ।**
**सुषुम्णावदनं भित्त्वा सुखाद्विशति मारुतः ॥ ४१ ॥**

विधिवदिति । विधिवत्प्राणसंयामैरासनजालंधरबन्धादिविधियुक्तप्राणायामैर्नाडीचक्रे नाडीनां चक्रं समूहस्तस्मिन्विशोधिते निर्मले सति मारुतो वायुः सुषुम्णा इडापिङ्गलयोर्मध्यस्था नाडी तस्या वदनं मुखं भित्त्वा सुखादनायासाद्विशति सुषुम्णान्तरिति शेषः ॥ ४१ ॥

**मारुते मध्यसंचारे मनःस्थैर्यं प्रजायते ।**
**यो मनःसुस्थिरीभावः सैवावस्था मनोन्मनी ॥४२॥**

मारुत इति । मध्ये सुषुम्णामध्ये संचारः सम्यक् चरणं गमनं मूर्धपर्यन्तं यस्य स मध्यसंचारस्तस्मिन्सति मनसः स्थैर्यं ध्येयाकारवृत्तिप्रवाहो जायते प्रादुर्भवति । यो मनसः सुस्थिरीभावः सुष्ठु स्थिरीभवनं सैव मनोन्मन्यवस्था । मनोन्मनीशब्द

उन्मनीपर्यायः । तथाऽग्रे वक्ष्यति—'राजयोगः समाधिश्च' इत्यादिना ॥ ४२ ॥

**तत्सिद्धये विधानज्ञाश्चित्रान्कुर्वन्ति कुम्भकान् ।**
**विचित्रकुम्भकाभ्यासाद्विचित्रां सिद्धिमाप्नुयात् ॥**

विचित्रेषु कुम्भकेषु प्रवृत्तिं जनयितुं तेषां मुख्यफलमवान्तरफलं चाह— तत्सिद्धय इति । विधानं कुम्भकानुष्ठानप्रकारस्तज्जानन्तीति विधानज्ञास्तत्सिद्धय उन्मन्यवस्थासिद्धये चित्रान्सूर्यभेदनादिभेदेन नानाविधान्कुम्भकान्कुर्वन्ति विचित्राश्च ते कुम्भकाश्च विचित्रकुम्भकास्तेषामभ्यासादनुष्ठानाद्विचित्रामणिमादिभेदेन नानाविधां विलक्षणां वा जन्मौषधिमन्त्रतपोजाताम् । तदुक्तं भागवते—"जन्मौषधितपोमन्त्रैर्यावतीरिह सिद्धयः । योगेनाप्नोति ताः सर्वा नान्यैर्योगगतिं व्रजेत् ॥" इति । आप्नुयात्प्रत्याहारादिपरम्परयेति भावः ॥ ४३ ॥

**अथ कुम्भकभेदाः—**

**सूर्यभेदनमुज्जायी सीत्कारी शीतली तथा ।**
**भस्त्रिका भ्रामरी मूर्च्छा प्लाविनीत्यष्ट कुम्भकाः ॥**

अथाष्ट कुम्भकान्नामभिर्निर्दिशति — सूर्यभेदनमिति । स्पष्टम् ॥ ४४ ॥

**पूरकान्ते तु कर्तव्यो बन्धो जालंधराभिधः ।**
**कुम्भकान्ते रेचकादौ कर्तव्यस्तूड्डियानकः ॥ ४५ ॥**

अथ हठसिद्धावनन्यसिद्धां पारमहंसीं सर्वकुम्भकसाधारणयुक्तिमाह त्रिभिः—पूरकान्त इति । जालंधर इत्यभिधा नाम यस्य स जालंधराभिधो बन्धो बध्नाति प्राणवायुमिति बन्धः कण्ठाकुञ्चनपूर्वकं चिबुकस्य हृदि स्थापनं जालंधरबन्धः पूरकान्ते पूरकस्यान्ते पूरकानन्तरं झटिति कर्तव्यः । तुशब्दात्कुम्भकादावुड्डियानकस्तु कुम्भकान्ते कुम्भकस्यान्ते किंचित्कुम्भकशेषे रेचकस्यादौ रेचकादौ रेचकात्पूर्वं कर्तव्यः । प्रयत्नविशेषेण नाभिप्रदेशस्य पृष्ठत आकर्षणमुड्डियानबन्धः ॥ ४५ ॥

**अधस्तात्कुञ्चनेनाशु कण्ठसंकोचने कृते ।**
**मध्ये पश्चिमतानेन स्यात्प्राणो ब्रह्मनाडिगः ॥ ४६ ॥**

अधस्तादिति । कण्ठस्य संकोचनं कण्ठसंकोचनं तस्मिन्कृते सति जालंधरबन्धे कृते सतीत्यर्थः । आश्वव्यवहितोत्तरमेवाधस्तादधःप्रदेशादाकुञ्चनेनाधाराकुञ्चनेन मूलबन्धेनेत्यर्थः । मध्ये नाभिप्रदेशे पश्चिमतः पृष्ठतस्तानंताननमाकर्षणं तेनोड्डियानबन्धेनेत्यर्थः । उक्तरीत्या कृतेन बन्धत्रयेण प्राणो वायुर्ब्रह्मनाडीं सुषुम्णां गच्छतीति ब्रह्मनाडिगः सुषुम्णानाडिगामी स्यादित्यर्थः । अत्रेदं रहस्यम् । यदि श्रीगुरुमुखाज्जिह्वाबन्धः

सम्यक्परिज्ञातस्तर्हि जिह्वाबन्धपूर्वकेण जालंधरबन्धेनैव प्राणायामः सिध्यति। वायुप्रकोपेनैवमधातुवपुःकृशत्वं ? वदने प्रसन्नतेत्यादीनि सर्वाणि लक्षणानि जायन्त इति मूलबन्धोड्डियानबन्धौ नोपयुक्तौ। तयोर्जिह्वाबन्धपूर्वकेण जालंधरबन्धेनान्यथा सिद्धत्वात्। जिह्वाबन्धो न विदितश्चेत् 'अधस्तात्कुञ्चनेन' इति श्लोकोक्तरीत्या प्राणायामाः कर्तव्याः। त्रयोऽपि बन्धा गुरुमुखाज्ज्ञातव्याः। मूलबन्धस्तु सम्यगज्ञातो नानारोगोत्पादकः। तथा हि—यदि मूलबन्धे कृते धातुक्षयो विष्टम्भोऽग्निमान्द्यं नादमान्द्यं गुटिकासमूहाकारमजस्येव पुरीषं स्यात्तदा मूलबन्धः सम्यङ् न ज्ञात इति बोध्यम्। यदि तु धातुपुष्टिः सम्यङ् मलशुद्धिरग्निदीप्तिः सम्यङ् नादाभिव्यक्तिश्च स्यात्तदा ज्ञेयं मूलबन्धः सम्यग्जात इति ॥ ४६ ॥

**अपानमूर्ध्वमुत्थाप्य प्राणं कण्ठादधो नयेत्।**
**योगी जराविमुक्तः सन्षोडशाब्दवया भवेत् ॥ ४७॥**

अपानमिति। अपानमपानवायुमूर्ध्वमुत्थाप्याधाराकुञ्चनेन प्राणं प्राणवायुं कण्ठादधः अधोभागे नयेत्प्रापयेद्यः स योगी योगोऽस्यास्ति अभ्यस्यत्वेनेति योगी योगाभ्यासी जरया वार्धकेन विमुक्तो विशेषेण मुक्तः सन्। षोडशानामब्दानां समाहारः षोडशाब्दं षोडशाब्दं वयो यस्य स तादृशो भवेत्।

यद्यपि 'पूरकान्ते तु कर्तव्यः' इत्यादिना त्रयाणां श्लोकानामेक एवार्थः पर्यवस्यति तथाऽपि 'पूरकान्ते तु कर्तव्यः' इत्यनेन बन्धानां काल उक्तः । अधस्तात्कुञ्चनेनेत्यनेन बन्धानां स्वरूपमुक्तम् । अपानमूर्ध्वमुत्थाप्येत्यनेन बन्धानां फलमुक्तमिति विशेषः । जालंधरबन्धे मूलबन्धे च कृते नाभेरधोभाग आकर्षणाख्यो बन्ध उड्डियानबन्धो भवत्येवेत्यस्मिञ्श्लोके नोक्तः । तथा चोक्तं ज्ञानेश्वरेण गीताषष्ठाध्यायव्याख्यायाम्—'मूलबन्धे जालंधरबन्धे च कृते नाभेरधोभाग आकर्षणाख्यो बन्धः स्वयमेव भवति' इति ॥ ४७ ॥

**आसने सुखदे योगी बद्ध्वा चैवासनं ततः ।**
**दक्षनाड्या समाकृष्य बहिःस्थं पवनं शनैः ॥ ४८ ॥**

"योगाभ्यासक्रमं वक्ष्ये योगिनां योगसिद्धये । उषःकाले समुत्थाय प्रातःकालेऽथ वा बुधः ॥ १ ॥ गुरुं संस्मृत्य शिरसि हृदये स्वेष्टदेवताम् । शौचं कृत्वा दन्तशुद्धिं विदध्याद्भस्मधारणम् ॥ २ ॥ शुचौ देशे मठे रम्ये प्रतिष्ठाप्यासनं मृदु । तत्रोपविश्य संस्मृत्य मनसा गुरुमीश्वरम् ॥ ३ ॥ देशकालौ च संकीर्त्य संकल्प्य विधिपूर्वकम् । अद्येत्यादि श्रीपरमेश्वरप्रसादपूर्वकं समाधितत्फलसिद्ध्यर्थमासनपूर्वकान्प्राणायामादीन्

मणिभ्राजत्फणासहस्रविधृतविश्वंभरामण्डलायानन्ताय नागराजाय नमः। ततोऽभ्यसेदासनानि श्रमे जाते शवासनम्। अन्ते समभ्यसेत्तत्तु श्रमाभावे तु नाभ्यसेत् ॥ ५ ॥ करणीं विपरीताख्यां कुम्भकात्पूर्वमभ्यसेत्। जालंधरप्रसादार्थं कुम्भकात्पूर्वयोगतः ॥ ६ ॥ विधायाचमनं कृत्वा कर्माङ्गं प्राणसंयमम्। योगीन्द्रादीन्नमस्कृत्य कौर्माच्च शिववाक्यतः ॥ ७ ॥" कूर्मपुराणे शिववाक्यम्—"नमस्कृत्याथ योगीन्द्रान्सशिष्यांश्च विनायकम्। गुरुं चैवाथ मां योगी युञ्जीत सुसमाहितः ॥ ८ ॥ बद्ध्वाभ्यासे सिद्धपीठं कुम्भकाबन्धपूर्वकम्। प्रथमे दश कर्तव्याः पञ्चवृद्ध्या दिने दिने ॥ ९ ॥ कार्या अशीतिपर्यन्तं कुम्भकाः सुसमाहितैः। योगीन्द्रः प्रथमं कुर्यादभ्यासं चन्द्रसूर्ययोः ॥ १० ॥ अनुलोमविलोमाख्यमेतं प्राहुर्मनीषिणः। सूर्यभेदनमभ्यस्य बन्धपूर्वकमेकधीः ॥ ११ ॥ उज्जायिनं ततः कुर्यात्सीत्कारीं शीतलीं ततः। भस्त्रिकां च समभ्यस्य कुर्यादन्यान्न वा परान् ॥ १२ ॥ मुद्राः समभ्यसेद्बुद्ध्वा गुरुवक्त्राद्यथाक्रमम्। ततः पद्मासनं बद्ध्वा कुर्यान्नादानुचिन्तनम् ॥ १३ ॥ अभ्यासं सकलं कुर्यादीश्वरार्पणमादृतः। अभ्यासादुत्थितः स्नानं कुर्यादुष्णेन वारिणा ॥ १४ ॥ स्नात्वा समापयेन्नित्यं कर्म संक्षेपतः सुधीः। मध्याह्नेऽपि तथाऽभ्यस्य किंचिद्विश्रम्य भोजनम् ॥ १५ ॥ कुर्वीत योगिना

पथ्यमपथ्यं न कदाचन । एलां वापि लवङ्गं वा भोजनान्न च भक्षयेत् ॥ १६ ॥ केचित्कर्पूरमिच्छन्ति ताम्बूलं शोभनं तथा । चूर्णेन रहितं शस्तं पवनाभ्यासयोगिनाम् ॥ १७ ॥ इति चिन्तामणेर्वाक्यं स्वारस्यं भजते न हि । केचित्पदेन यस्मात्तु तयोः शीतोष्णहेतुना ॥ १८ ॥ भोजनानन्तरं कुर्यान्मोक्षशास्त्रावलोकनम् । पुराणश्रवणं वाऽपि नामसंकीर्तनं विभोः ॥१९॥ सायंसंध्याविधिं कृत्वा योगं पूर्ववदभ्यसेत् । यदा त्रिघटिकाशेषो दिवसोऽभ्यासमाचरेत् ॥ २० ॥ अभ्यासानन्तरं कार्या सायंसंध्या सदा बुधैः । अर्धरात्रे हठाभ्यासं विदध्यात्पूर्ववद्यमी ॥ २१ ॥ विपरीतां तु करणीं सायंकालार्धरात्रयोः । नाभ्यसेद्भोजनादूर्ध्वं यतः सा न प्रशस्यते" ॥ २२ ॥ अथोद्देशानुक्रमणं कुम्भकान्विवक्षुस्तत्र प्रथमोदितं सूर्यभेदनं तद्गुणांश्चाह त्रिभिः—आसन इति । सुखं ददातीति सुखदं तस्मिन्सुखदे । "शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः । नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥" इत्युक्तलक्षणे विविक्तदेशे सुखासनस्थः शुचिः 'समग्रीवशिरःशरीरः' इति श्रुतेश्च चैलाजिनकुशोत्तर आसने । आस्तेऽस्मिन्नित्यासनम्, आस्यतेऽनेनेति वा तस्मिन् योगी योगाभ्यासी । आसनं स्वस्तिकवीरसिद्धपद्माद्यन्यतमं मुख्यत्वात्सिद्धासनमेव वा बद्ध्वैव बन्धनेन संपाद्यैव कृत्वैवेत्यर्थः । तत आसनबन्धानन्तरं दक्षा

दक्षिणभागस्था या नाडी पिङ्गला तया बहिःस्थं देहाद्बहिर्वर्तमानं पवनं वायुं शनैर्मन्दं मन्दमाकृष्य पिङ्गलया मन्दं मन्दं पूरकं कृत्वेत्यर्थः ॥ ४८ ॥

**आ केशादा नखाग्राच्च निरोधावधि कुम्भयेत् ।**
**ततः शनैः सव्यनाड्या रेचयेत्पवनं शनैः ॥ ४९ ॥**

आ केशादिति । केशाना मर्यादीकृत्याकेशं तस्मान्नखाग्राना मर्यादीकृत्येत्यानखाग्रं तस्माच्च निरोधस्य वायोरवरोधस्यावधिर्मर्यादा यस्मिन्कर्मणि तत्तथा कुम्भयेत् । केशपर्यन्तं नखाग्रपर्यन्तं च वायोर्निरोधो यथा भवेत्तथाऽतिप्रयत्नेन कुम्भकं कुर्यादित्यर्थः । ननु "हठान्निरुद्धः प्राणोऽयं रोमकूपेषु निःसरेत् । देहं विदारयत्येष कुष्ठादि जनयत्यपि । ततः प्रत्यापितव्योऽसौ क्रमेणारण्यहस्तिवत् । वन्यो गजो गजारिर्वा क्रमेण मृदुतामियात् । करोति शास्तृनिर्देशान्न च तं परिलङ्घयेत् । तथा प्राणो हृदिस्थोऽयं योगिनां क्रमयोगतः । गृहीतः सेव्यमानस्तु विस्रम्भमुपगच्छति ॥" इति वाक्यविरुद्धमिति प्रयत्नेन कुम्भकं कुर्यादिति कथमुक्तमिति चेन्न । 'हठान्निरुद्धः प्राणोऽयम्' इति वाक्यस्य बलादचिरेण प्राणजयं करिष्यामीति बुद्ध्याऽऽरम्भः । एवं च बह्वभ्यासासक्तपरत्वात्क्रमेणारण्यहस्तिवदिति दृष्टान्तस्वारस्याच्च । अत

एव सूर्याचन्द्रमसोरभ्यासे धारयित्वा यथाशक्ति निधारयेदिति निरोधत इति चोक्तं संगच्छते । तस्मात्कुम्भकस्त्वतिप्रयत्नपूर्वकं कर्तव्यः । यथा यथाऽतियत्नेन कुम्भकः क्रियते तथा तथा तस्मिन्गुणाधिक्यं भवेत् । यथा यथा च शिथिलः कुम्भकः स्यात्तथा तथा गुणाल्पत्वं स्यात् । अत्र योगिनामनुभवोऽपि मानम् । पूरकस्तु शनैः शनैः कार्यः, वेगाद्वा कर्तव्यः, वेगादपि कृते पूरके दोषाभावात् । रेचकस्तु शनैः शनैरेव कर्तव्यः । वेगात्कृते रेचके बलहानिप्रसङ्गात् । ततः शनैः शनैरेव रेचयेन्न तु वेगतः । इत्याद्यनेकधा ग्रन्थकारोक्तेश्च । ततो निरोधावधिकुम्भकानन्तरं शनैः शनैर्मन्दं मन्दं सव्ये वामभागे स्थिता नाडी सव्यनाडी तया सव्यनाड्या इडया पवनं वायुं रेचयेद्बहिर्निःसारयेत् । पुनः शनैरित्युक्तिस्तु शनैरेव रेचयेदित्यवधारणार्था । तदुक्तम्—" विस्मये च विषादे च दैन्ये चैवावधारणे । तथा प्रसादने हर्षे वाक्यमेकं द्विरुच्यते ॥ " इति ॥४९॥

**कपालशोधनं वातदोषघ्नं कृमिदोषहृत् ।**
**पुनः पुनरिदं कार्यं सूर्यभेदनमुत्तमम् ॥ ५० ॥**

कपालशोधनमिति । कपालस्य मस्तकस्य शोधनं शुद्धिकरं वातजा दोषा वातदोषा अशीतिप्रकारास्तान्हन्तीति वातदोषघ्नं कृमीणामुदरे जातानां दोषो विकारस्तं हरतीति कृमिदोषहृत् ।

पुनः पुनर्भूयो भूयः कार्यम् । सूर्येणापूर्य कुम्भयित्वा चन्द्रेण रेचनमिति रीत्येदमुत्तममुत्कृष्टं सूर्यभेदनं सूर्यभेदनाख्यमुक्तं योगिभिरिति शेषः ॥ ५० ॥

**अथोज्जायी—**

**मुखं संयम्य नाडीभ्यामाकृष्य पवनं शनैः ।**
**यथा लगति कण्ठात्तु हृदयावधि सस्वनम् ।**
**पूर्ववत्कुम्भयेत्प्राणं रेचयेदिडया ततः ॥ ५१ ॥**

उज्जायिनमाह सार्धेन—मुखमिति । मुखमास्यं संयतं कृत्वा मुद्रयित्वेत्यर्थः । कण्ठात्तु कण्ठादारभ्य हृदयावधि हृदयमवधिर्यस्मिन्कर्मणि तत्तथा स्वनेन सहितं यथास्यात्तथा । उभे क्रियाविशेषणे । लगति श्लिष्यति पवन इत्यर्थात् । तथा तेन प्रकारेण नाडीभ्यामिडापिङ्गलाभ्यां पवनं वायुं शनैर्मन्दमाकृष्याकृष्टं कृत्वा पूरयित्वेत्यर्थः । प्राणं पूर्ववत्पूर्वेण सूर्यभेदनेन तुल्यं पूर्ववत् । 'आ केशादा नखाग्राच्च निरोधावधि कुम्भयेत्' इत्युक्तरीत्या कुम्भयेद्रोधयेत् । ततः कुम्भकानन्तरमिडया वामनाड्या रेचयेत्त्यजेत् ॥ ५१ ॥

**श्लेष्मदोषहरं कण्ठे देहानलविवर्धनम् ।**
**नाडीजलोदराधातुगतदोषविनाशनम् ।**
**गच्छता तिष्ठता कार्यमुज्जाय्याख्यं तु कुम्भकम् ॥**

उज्जायिगुणानाह सार्धश्लोकेन—श्लेष्मदोषहरमिति । कण्ठे कण्ठप्रदेशे श्लेष्मणो दोषाः श्लेष्मदोषाः कासादयस्तान् हरतीति श्लेष्मदोषहरस्तं देहानलस्य देहे मध्यगतानलस्य जाठरस्य विवर्धनं विशेषेण वर्धनं दीपनमित्यर्थः । नाडीति । नाडी सिरा जलं पीतमुदकमुदरं तुन्दमा समन्ताद्देहे वर्तमाना धातव आधातवः । एषामितरेतरद्वन्द्वः । तेषु गतः प्राप्तो यो दोषो विकारस्तं विशेषेण नाशयतीति नाडीजलोदराधातुगतदोष-विनाशनम् । गच्छता गमनं कुर्वता तिष्ठता स्थितेन वाऽपि पुंसा उज्जाय्याख्यमुज्जायीत्याख्या यस्य तत् । तु इत्यनेनास्य वैशिष्ट्यं द्योतयति । कार्यं कर्तव्यम् । उज्जापीति क्वचित्पाठः । गच्छता तिष्ठता तु बन्धरहितः कर्तव्यः । कुम्भकशब्द-स्त्रिलिङ्गः । पुंलिङ्गपाठे तु विशेषणेष्वपि पुंलिङ्गः पाठः कार्यः ॥ ५२ ॥

अथ सीत्कारी—

**सीत्कां कुर्यात्तथा वक्त्रे घ्राणेनैव विजृम्भिकाम् ।**
**एवमभ्यासयोगेन कामदेवो द्वितीयकः ॥ ५३ ॥**

सीत्कारीकुम्भकमाह—सीत्कामिति । वक्त्रे मुखे सीत्कां सीदेव सीत्का सीदिति शब्दः सीत्कारस्तां कुर्यात् । ओष्ठयोरन्तरे संलग्नया जिह्वया सीत्कारपूर्वकं मुखेन पूरकं

कुर्यादित्यर्थः । घ्राणेनैव नासिकयैवेत्यनेनोभाभ्यां नासापुटाभ्यां रेचकः कार्य इत्युक्तम् । एवशब्देन वक्त्रस्य व्यवच्छेदः । वक्त्रेण वायोर्निःसारणं त्वभ्यासानन्तरमपि न कार्यम्, बलहानिकरत्वात् । विजृम्भिकां रेचकं कुर्यादित्यत्रापि संबध्यते । कुम्भकस्त्वनुक्तोऽपि सीत्कार्याः कुम्भकत्वादेवावगन्तव्यः । अथ सीत्कार्याः प्रशंसा— एवमुक्तप्रकारेणाभ्यासः पौनःपुन्येनानुष्ठानं स एव योगः योगसाधनत्वात्तेन द्वितीय एव द्वितीयकः कामदेवः कंदर्पः । रूपलावण्यातिशयेन कामदेवसादृश्यात् ॥ ५३ ॥

**योगिनीचक्रसामान्यः सृष्टिसंहारकारकः ।**
**न क्षुधा न तृषा निद्रा नैवालस्यं प्रजायते ॥ ५४ ॥**

योगिनीनां चक्रं योगिनीचक्रं योगिनीसमूहः । तस्य सामान्यः संसेव्यः । सृष्टिः प्रपञ्चोत्पत्तिः संहारस्तल्लयः तयोः कारकः कर्ता । क्षुधा भोक्तुमिच्छा न । तृषा जलपानेच्छा न । निद्रा सुषुप्तिर्न । आलस्यं कायचित्तगौरवात्प्रवृत्त्यभावः । कायगौरवं कफादिना चित्तगौरवं तमोगुणेन । नैव प्रजायते नैव प्रादुर्भवति । एवमभ्यासयोगेनेति प्रजायत इति च प्रतिवाक्यं संबध्यते ॥ ५४ ॥

**भवेत्सत्त्वं च देहस्य सर्वोपद्रववर्जितः ।**
**अनेन विधिना सत्यं योगीन्द्रो भूमिमण्डले ॥५५॥**

भवेदिति । देहस्य शरीरस्य सत्त्वं बलं च भवेत् । अनेनोक्तेन विधिनाऽभ्यासविधिना योगीन्द्रो योगिनामिन्द्र इव योगीन्द्रो भूमिमण्डले सर्वैरुपद्रवैर्वर्जितः सर्वोपद्रववर्जितो भवेत्सत्यम् , 'सर्वं वाक्यं सावधारणम्' इति न्यायात् । यदुक्तं फलं तत्सत्यमेवेत्यर्थः ॥ ५५ ॥

**अथ शीतली—**

**जिह्वया वायुमाकृष्य पूर्ववत्कुम्भसाधनम् ।**
**शनकैर्घ्राणरन्ध्राभ्यां रेचयेत्पवनं सुधीः ॥ ५६ ॥**

शीतलीकुम्भकमाह—जिह्वयेति । जिह्वयोष्ठयोर्बहिर्निर्गतया विहंगमाधरचञ्चुसदृशया वायुमाकृष्य शनैः पूरकं कृत्वेत्यर्थः । पूर्ववत्सूर्यभेदनवत्कुम्भस्य कुम्भकस्य साधनं विधानं कृत्वेत्यध्याहारः । सुधीः शोभना धीर्यस्य सः घ्राणस्य रन्ध्रे ताभ्यां नासापुटविवराभ्यां शनकैः शनैरेव । 'अव्ययसर्वनाम्नाम्—' इत्यकच् । पवनं वायुं रेचयेत् ॥ ५६ ॥

**[redacted]रं पित्तं क्षुधां तृषाम् ।**
**विषाणि शीतलीनाम कुम्भिकेयं निहन्ति हि ॥५७॥**

शीतलीगुणानाह—गुल्मश्च प्लीहश्च गुल्मप्लीहौ रोगविशेषावादी येषां ते गुल्मप्लीहादिकास्तान् रोगानामयान् ज्वरं

ज्वराख्यं रोगं पित्तं पित्तविकारं क्षुधां भोक्तुमिच्छां तृषां जलपानेच्छां विषाणि सर्पादिविषजनितविकारान्। शीतली नामेति प्रसिद्धार्थकमव्ययम्। इयमुक्ता कुम्भिका निहन्ति नितरां हन्ति। कुम्भशब्दः स्त्रीलिङ्गोऽपि। तथा च श्रीहर्षः— 'उदस्य कुम्भीरथ शातकुम्भजाः' इति ॥ ५७ ॥

**अथ भस्त्रिका—**

**ऊर्वोरुपरि संस्थाप्य शुभे पादतले उभे।**
**पद्मासनं भवेदेतत्सर्वपापप्रणाशनम् ॥ ५८ ॥**

भस्त्राकुम्भकस्य पद्मासनपूर्वकमेवानुष्ठानात्तदादौ पद्मासनमाह—ऊर्वोरिति। उपर्युत्ताने शुभे शुद्धे उभे द्वे पादयोस्तले अधःप्रदेशौ ऊर्वोः संस्थाप्य सम्यक् स्थापयित्वा वसेत्। एतत्पद्मासनं भवेत्। कीदृशम्? सर्वेषां पापानां प्रकर्षेण नाशनम्। अत्रोपरीत्यव्ययमुत्तानवाचकम्। तथा च कारकेषु मनोरमायाम् 'उपर्युपरिबुद्धीनाम्' इत्यत्रोपरिबुद्धीनामित्यस्योत्तानबुद्धीनामिति व्याख्यानं कृतम् ॥ ५८ ॥

**सम्यक्पद्मासनं बद्ध्वा समग्रीवोदरं सुधीः।**
**मुखं संयम्य यत्नेन प्राणं घ्राणेन रेचयेत् ॥ ५९ ॥**

भस्त्रिकाकुम्भकमाह—सम्यगिति। ग्रीवा च उदरं च ग्रीवोदरम्। प्राण्यङ्गत्वादेकवद्भावः। समं ग्रीवोदरं यस्य स

समग्रीवोदरः सुस्थिता धीर्यस्य स सुधीः पद्मासनं सम्यक् स्थिरं बद्ध्वा मुखं संयम्य संयतं कृत्वा यत्नेन प्रयत्नेन घ्राणेन घ्राणस्यैकतरेण रन्ध्रेण प्राणं शरीरान्तः स्थितं वायुं रेचयेत् ॥ ५९ ॥

**यथा लगति हृत्कण्ठे कपालावधि सस्वनम् ।**
**वेगेन पूरयेच्चापि हृत्पद्मावधि मारुतम् ॥ ६० ॥**

रेचकप्रकारमाह—यथेति । हृच्च कण्ठश्च हृत्कण्ठं तस्मिन् हृत्कण्ठे । समाहारद्वन्द्वः । कपालावधि कपालपर्यन्तं स्वनेन सहितं सस्वनं यथा स्यात्तथा येन प्रकारेण लगति प्राण इति शेषः । तथा रेचयेत् । हृत्पद्ममवधिर्यस्मिन् कर्मणि तत् हृत्पद्मावधि वेगेन तरसा मारुतं वायुं पूरयेत् । चापीति पादपूरणार्थम् ॥ ६० ॥

**पुनर्विरेचयेत्तद्वत्पूरयेच्च पुनः पुनः ।**
**यथैव लोहकारेण भस्त्रा वेगेन चाल्यते ॥ ६१ ॥**

पुनरिति । तद्वत्पूर्ववत्पुनर्विरेचयेत्पुनः पुनः पूरयेच्चेत्यन्वयः । उक्तेऽर्थे दृष्टान्तमाह—यथैवेति । लोहकारेण लोहविकाराणां कर्त्रा भस्त्राऽग्नेर्धमनसाधनीभूतं चर्म यथैव येन प्रकारेण वेगेन चाल्यते ॥ ६१ ॥

**तथैव स्वशरीरस्थं चालयेत्पवनं धिया ।**
**यदा श्रमो भवेद्देहे तदा सूर्येण पूरयेत् ॥ ६२ ॥**
**यथोदरं भवेत्पूर्णमनिलेन तथा लघु ।**

तथैव तेनैव प्रकारेण स्वशरीरस्थं स्वशरीरे स्थितं पवनं प्राणं धिया बुद्ध्या चालयेत् । रेचकपूरकयोर्निरन्तरावर्तनेन चालनस्यावधिमाह—यदा श्रम इति । यदा यस्मिन्काले देहे शरीरे श्रमो रेचकपूरकयोर्निरन्तरावर्तनेनायासो भवेत्तदा तस्मिन्काले । यथा येन प्रकारेण पवनेन वायुना लघु क्षिप्रमेवोदरं पूर्णं भवेत्तथा तेन प्रकारेण सूर्यनाड्या पूरयेत् । 'लघु क्षिप्रमरं द्रुतम्' इत्यमरः ॥ ६२ ॥

**धारयेन्नासिकां मध्यातर्जनीभ्यां विना दृढम् ॥६३॥**

पूरकानन्तरं यत्कर्तव्यं तदाह—धारयेदिति । मध्यातर्जनीभ्यां मध्यमातर्जनीभ्यां विनाऽङ्गुष्ठानामिकाकनिष्ठिकाभिर्नासिकां दृढं धारयेत् । अङ्गुष्ठेन दक्षिणनासापुटं निरुध्यानामिकाकनिष्ठिकाभ्यां वामनासापुटं निरुध्य नासिकां दृढं गृह्णीयादित्यर्थः ॥ ६३ ॥

**विधिवत्कुम्भकं कृत्वा रेचयेदिडयाऽनिलम् ।**
**वातपित्तश्लेष्महरं शरीराग्निविवर्धनम् ॥ ६४ ॥**

विधिवदिति । बन्धपूर्वकं कुम्भकं कृत्वेडया चन्द्रनाड्याऽनिलं वायुं रेचयेत् । भस्त्राकुम्भकस्येयं परिपाटी । वामनासिकापुटं दक्षिणभुजानामिकाकनिष्ठिकाभ्यां निरुध्य दक्षिणनासिकापुटेन भस्त्रावद्वेगेन रेचकपूरकाः कार्याः । श्रमे जाते तेनैव नासापुटेन पूरकं कृत्वाऽङ्गुष्ठेन दक्षिणं नासापुटं निरुध्य यथाशक्ति कुम्भकं धारयेत् । पश्चादिडया रेचयेत् । पुनर्दक्षिणनासापुटमङ्गुष्ठेन निरुध्य वामनासिकापुटेन भस्त्रावज्झटिति रेचकपूरकाः कर्तव्याः । श्रमे जाते तेनैव नासिकापुटेन पूरकं कृत्वाऽनामिकाकनिष्ठिकाभ्यां वामनासिकापुटं निरुध्य यथाशक्ति कुम्भकं कृत्वा पिङ्गलया रेचयेदित्येका रीतिः । वामनासिकापुटमनामिकाकनिष्ठिकाभ्यां दक्षिणनासिकापुटेन पूरकं कृत्वा झटित्यङ्गुष्ठेन निरुध्य वामनासापुटेन रेचयेत् । एवं शतधा कृत्वा श्रमे जाते तेनैव पूरयेत् । बन्धपूर्वकं कृत्वेडया रेचयेत् । पुनर्दक्षिणनासापुटमङ्गुष्ठेन निरुध्य वामनासापुटेन पूरकं कृत्वा झटिति वामनासिकापुटमनामिकाकनिष्ठिकाभ्यां निरुध्य पिङ्गलया रेचयेद्भस्त्रावत् । पुनः पुनरेवं कृत्वा रेचकपूरकावृत्तिश्रमे जाते वामनासापुटेन पूरकं कृत्वाऽनामिकाकनिष्ठिकाभ्यां धृत्वा कुम्भकं कृत्वा पिङ्गलया रेचयेदिति द्वितीया रीतिः । भस्त्रिकागुणानाह— वातपित्तेति । वातश्च पित्तं च श्लेष्मा च वातपित्तश्लेष्माणस्तान्

हरतीति तादृशं शरीरे देहे योऽग्निर्जठरानलस्तस्य विशेषेण वर्धनं दीपनम् ॥ ६४ ॥

**कुण्डलीबोधकं क्षिप्रं पवनं सुखदं हितम् ।**
**ब्रह्मनाडीमुखेसंस्थकफाद्यर्गलनाशनम् ॥ ६५ ॥**

क्षिप्रं शीघ्रं कुण्डल्याः सुप्ताया बोधकं बोधकर्तृ पुनातीति पवनं पवित्रकारकं सुखं ददातीति सुखदं हितं त्रिदोषहरत्वात्सर्वेषां हितं सर्वदा च हितं सर्वेषां कुम्भकानां सर्वदा हितत्वेऽपि सूर्यभेदनोज्जायिनावुष्णौ प्रायेण शीते हितौ । सीत्कारीशीतल्यौ शीतले प्रायेणोष्णे हिते । भस्त्राकुम्भकः समशीतोष्णः सर्वदा हितः सर्वेषां कुम्भकानां सर्वरोगहरत्वेऽपि सूर्यभेदनं प्रायेण वातहरम् । उज्जायी प्रायेण श्लेष्महरः । सीत्कारीशीतल्यौ प्रायेण पित्तहरे । भस्त्राख्यः कुम्भकः त्रिदोषहर इति बोध्यम् । ब्रह्मनाडी सुषुम्णा ब्रह्मप्रापकत्वात् । तथा च श्रुतिः—“ शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभि निःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति ” । तस्य मुखेऽग्रभागे संस्थः सम्यक् स्थितो यः कफादिरूपोऽर्गलः प्राणगतिप्रतिबन्धकस्तस्य नाशनं नाशकर्तृ ॥ ६५ ॥

**सम्यग्गात्रसमद्भूतग्रन्थित्रयविभेदकम् ।**
**विशेषेणैव कर्तव्यं भस्त्राख्यं कुम्भकं त्विदम् ॥ ६६ ॥**

सम्यग्दृढीभूतं गात्रं गात्रमध्ये सुषुम्णायामेव सम्यगुद्भूतं समुद्भूतं जातं यद्ग्रन्थीनां त्रयं ग्रन्थित्रयं ब्रह्मग्रन्थिविष्णुग्रन्थिरुद्रग्रन्थिरूपं तस्य विशेषेण भेदजनकम्। अत एव इदं भस्त्रा इत्याख्या यस्येति भस्त्राख्यं कुम्भकं तु विशेषेणैव कर्तव्यम्, अवश्यकर्तव्यमित्यर्थः। सूर्यभेदनादयस्तु यथासंभवं कर्तव्याः ॥ ६६ ॥

**अथ भ्रामरी—**

**वेगाद्घोषं पूरकं भृङ्गनादं**
**भृङ्गीनादं रेचकं मन्दमन्दम्।**
**योगीन्द्राणामेवमभ्यासयोगा-**
**च्चित्ते जाता काचिदानन्दलीला ॥ ६७ ॥**

भ्रामरीकुम्भकमाह—वेगादिति। वेगात्तरसा घोषं सशब्दं यथा स्यात्तथा भृङ्गस्य भ्रमरस्य नाद इव नादो यस्मिन्कर्मणि तत्तथा पूरकं कृत्वा। भृङ्ग्यो भ्रमर्यस्तासां नाद इव नादो यस्मिंस्तत्तथा मन्दं मन्दं रेचकं कुर्यात्। पूरकानन्तरं कुम्भकस्तु भ्रामर्याः कुम्भकत्वादेव सिद्धो विशेषाच्च नोक्तः। पूरकरेचकयोस्तु विशेषोऽस्तीति तावेवोक्तौ। एवमुक्तरीत्याऽभ्यसनमभ्यासस्तस्य योगो युक्तिस्तस्माद्योगीन्द्राणां चित्ते काचिदनिर्वाच्या आनन्दे लीला क्रीडा आनन्दलीला जातोत्पन्ना भवति ॥ ६७ ॥

**अथ मूर्च्छा—**

**पूरकान्ते गाढतरं बद्ध्वा जालंधरं शनैः ।**
**रेचयेन्मूर्च्छनाख्येयं मनोमूर्च्छा सुखप्रदा ॥ ६८ ॥**

मूर्च्छाकुम्भकमाह—पूरकान्त इति । पूरकस्यान्तेऽवसानेऽतिशयेन गाढतरं जालंधराख्यं बन्धं बद्ध्वा शनैर्मन्दं मन्दं रेचयेत् । इयं कुम्भिका मूर्च्छनाख्या मूर्च्छना इत्याख्या यस्या इति मूर्च्छनाख्या । कीदृशी ? मनो मूर्च्छयतीति मनोमूर्च्छा । एतेन मूर्च्छनाया विग्रहदर्शनपूर्वकं फलमुक्तम् । पुनः कीदृशी ? सुखप्रदा सुखं प्रददातीति सुखप्रदा ॥ ६८ ॥

**अथ प्लाविनी—**

**अन्तःप्रवर्तितोदारमारुतापूरितोदरः ।**
**पयस्यगाधेऽपि सुखात्प्लवते पद्मपत्रवत् ॥ ६९ ॥**

प्लाविनीकुम्भकमाह—अन्तरिति । अन्तः शरीरान्तः प्रवर्तितः पूरित उदारोऽतिशयितो यो मारुतः समीरस्तेना समन्तात्पूरितमुदरं येन स पुमानगाधेऽप्यतलस्पर्शेऽपि पयसि जले पद्मपत्रवत्पद्मपत्रेण तुल्यं सुखादनायासात् प्लवते तरति गच्छति ॥ ६९ ॥

**प्राणायामस्त्रिधा प्रोक्तो रेचपूरककुम्भकैः ।**
**सहितः केवलश्चेति कुम्भको द्विविधो मतः ॥ ७० ॥**

अथ प्राणायामभेदानाह—प्राणायाम इति । प्राणस्य शरीरान्तःसंचारिवायोरायमनं निरोधनमायामः प्राणायामः । प्राणायामलक्षणमुक्तं गोरक्षनाथेन—'प्राणः स्वदेहजो वायुरायामस्तन्निरोधनम्' इति । रेचकश्च पूरकश्च कुम्भकश्च तैर्भेदैस्त्रिधा त्रिप्रकारकः रेचकप्राणायामः पूरकप्राणायामः कुम्भकप्राणायामश्चेति । रेचकलक्षणमाह याज्ञवल्क्यः—'बहिर्यद्रेचनं वायोरुदराद्रेचकः स्मृतः' इति । रेचकप्राणायामलक्षणम्—'निष्क्रम्य नासाविवरादशेषं प्राणं बहिः शून्यमिवानिलेन । निरुध्य संतिष्ठति रुद्धवायुः स रेचको नाम महानिरोधः' । पूरकलक्षणम्—'बाह्यादापूरणं वायोरुदरे पूरको हि सः' । पूरकप्राणायामलक्षणम्—'बाह्ये स्थितं प्राणपुटेन वायुमाकृष्य तेनैव शनैः समन्तात् । नाडीश्च सर्वाः परिपूरयेद्यः स पूरको नाम महानिरोधः' । कुम्भकलक्षणम्—'संपूर्य कुम्भवद्वायोर्धारणं कुम्भको भवेत्' । अयं कुम्भकस्तु पूरकप्राणायामादभिन्नः । भिन्नस्तु—'न रेचको नैव च पूरकोऽत्र नासापुटे संस्थितमेव वायुम् । सुनिश्चलं धारयते क्रमेण कुम्भाख्यमेतत्प्रवदन्ति तज्ज्ञाः' । अथ प्रकारान्तरेण प्राणायामं विभजते—सहित इति । कुम्भको द्विविधः सहितः केवलश्चेति । मतोऽभिमतो योगिनामिति शेषः । तत्र सहितो द्विविधः—रेचकपूर्वकः कुम्भकपूर्वकश्च । तदुक्तम्—'आरे-

च्यापूर्य वा कुर्यात्स वै सहितकुम्भकः’। तत्र रेचकपूर्वको रेचकप्राणायामादभिन्नः। पूरकपूर्वकः कुम्भकः पूरकप्राणायामादभिन्नः। केवलकुम्भकः कुम्भकप्राणायामादभिन्नः। प्रागुक्ताः सूर्यभेदनादयः पूरकपूर्वकस्य कुम्भकस्य भेदा ज्ञातव्याः ॥७०॥

**यावत्केवलसिद्धिः स्यात्सहितं तावदभ्यसेत्।**
**रेचकं पूरकं मुक्त्वा सुखं यद्वायुधारणम् ॥ ७१ ॥**

सहितकुम्भकाभ्यासस्यावधिमाह—यावदिति। केवलस्य केवलकुम्भकस्य सिद्धिः केवलसिद्धिर्यावत्पर्यन्तं स्यात्तावत्पर्यन्तं सहितकुम्भकं सूर्यभेदादिकमभ्यसेदनुतिष्ठेत्। सुषुम्णाभेदानन्तरं यदा सुषुम्णान्तर्घटशब्दा भवन्ति तदा केवलकुम्भकः सिध्यति। तदनन्तरं सहितकुम्भका दश विंशतिर्वा कार्याः। अशीतिसंख्यापूर्तिः केवलकुम्भकैरेव कर्तव्या। सति सामर्थ्ये केवलकुम्भका अशीतेरधिकाः कार्याः। केवलकुम्भकस्य लक्षणमाह—रेचकमिति। रेचकं पूरकं मुक्त्वा त्यक्त्वा सुखमनायासं यथा स्यात्तथा वायोर्धारणं वायुधारणं यत् ॥ ७१ ॥

**प्राणायामोऽयमित्युक्तः स वै केवलकुम्भकः।**
**कुम्भके केवले सिद्धे रेचपूरकवर्जिते ॥ ७२ ॥**

स वा इति। मिश्रितः केवलकुम्भकः प्राणायाम इत्ययमुक्तः। केवलं प्रशंसन्ति—केवल इति। रेचो रेचकः रेचश्च

पूरकश्च रेचपूरकौ ताभ्यां वर्जिते रहिते केवले कुम्भके सिद्धे सति ॥ ७२ ॥

**न तस्य दुर्लभं किंचित्त्रिषु लोकेषु विद्यते ।**
**शक्तः केवलकुम्भेन यथेष्टं वायुधारणात् ॥ ७३ ॥**

नेति । तस्य योगिनस्त्रिषु लोकेषु दुर्लभं दुष्प्रापं किंचित्किमपि यथेष्टं यथेच्छं वायोर्धारणं वाऽपि न विद्यते तस्य सर्वं सुलभमित्यर्थः । शक्त इति । केवलकुम्भकेन कुम्भकाभ्यासेन शक्तः समर्थो यथेष्टं यथेच्छं वायोर्धारणं तस्माद्वायुधारणात् ॥ ७३ ॥

**राजयोगपदं चापि लभते नात्र संशयः ।**
**कुम्भकात्कुण्डलीबोधः कुण्डलीबोधतो भवेत् ॥ ७४ ॥**

राजयोगपदं राजयोगात्मकं पदं लभते । अत्र संशयो न । निश्चितमेतदित्यर्थः । कुम्भकाभ्यासस्य परम्परया कैवल्यहेतुत्वमाह—कुम्भकादिति । कुम्भकात्कुम्भकाभ्यासात्कुण्डल्याधारशक्तिस्तस्या बोधो निद्राभङ्गो भवेत् । कुण्डल्या बोधः कुण्डलीबोधस्तस्मात्कुण्डलीबोधतः ॥ ७४ ॥

**अनर्गला सुषुम्णा च हठसिद्धिश्च जायते ।**
**हठं विना राजयोगो राजयोगं विना हठः ।**
**न सिध्यति ततो युग्ममा निष्पत्तेः समभ्यसेत् ॥ ७५ ॥**

सुषुम्णा मध्यनाड्यनर्गला कफाद्यर्गलरहिता भवेत् । हठस्य हठाभ्यासस्य सिद्धिः प्रत्याहारादिपरम्परया कैवल्यरूपा सिद्धिर्जायते । हठयोगराजयोगसाधनयोः परस्परोपकार्योपकारकत्वमाह—हठं विनेति । हठं हठयोगं विना राजयोगो न सिध्यति राजयोगं विना हठो न सिध्यति ततोऽन्यतरस्य सिद्धिर्नास्ति । तस्मान्निष्पत्तिं राजयोगसिद्धिमा मर्यादीकृत्य या निष्पत्तिस्तस्या राजयोगसिद्धिपर्यन्तं युग्मं हठयोगराजयोगद्वयमभ्यसेदनुतिष्ठेत् । हठातिरिक्ते साक्षात्परम्परया वा राजयोगसाधनेऽत्र राजयोगशब्दः, जीवनसाधने लाङ्गले जीवनशब्दप्रयोगवत् । राजयोगसाधनं चतुर्थोपदेशे वक्ष्यमाणमुन्मनीशांभवीमुद्रादिरूपमपरोक्षानुभूतावुक्तं पञ्चदशाङ्गरूपं दशाङ्गरूपं च, वाक्यसुधायामुक्तं दृश्यानुविद्धादिरूपं च ॥ ७५ ॥

**कुम्भकप्राणरोधान्ते कुर्याच्चित्तं निराश्रयम् ।**
**एवमभ्यासयोगेन राजयोगपदं व्रजेत् ॥ ७६ ॥**

हठाभ्यासाद्राजयोगप्राप्तिप्रकारमाह—कुम्भकेति । कुम्भकेन प्राणस्य यो रोधस्तस्यान्ते मध्ये चित्तमन्तःकरणं निराश्रयं कुर्यात् । संप्रज्ञातसमाधौ जातायां ब्रह्माकारस्थितेः परं वैराग्येण विलयं कुर्यादित्यर्थः । एवमुक्तरीत्याऽभ्यासस्य योगो युक्तिस्तेन ।

'योगः संनहनोपायध्यानसंगतियुक्तिषु' इति कोशः । राजयोगपदं राजयोगात्मकं पदं व्रजेत्प्राप्नुयात् ॥ ७६ ॥

**वपुःकृशत्वं वदने प्रसन्नता**
**नादस्फुटत्वं नयने सुनिर्मले ।**
**अरोगता बिन्दुजयोऽग्निदीपनं**
**नाडीविशुद्धिर्हठसिद्धिलक्षणम् ॥ ७७ ॥**

हठसिद्धिज्ञापकमाह—वपुःकृशत्वमिति । वपुषो देहस्य कृशत्वं कार्श्यं वदने मुखे प्रसन्नता प्रसादो नादस्य ध्वनेः स्फुटत्वं प्राकट्यं नयने नेत्रे सुष्ठु निर्मले अरोगस्य भावोऽरोगता आरोग्यं बिन्दोर्धातोर्जयः क्षयाभावरूपः अग्नेरुदर्यस्य दीपनं दीप्तिर्नाडीनां विशेषेण शुद्धिर्मलापगमः एतद्धठस्य हठाभ्याससिद्धेर्भाविन्या लक्ष्यतेऽनेनेति लक्षणम् ॥ ७७ ॥

**इति हठप्रदीपिकायां द्वितीयोपदेशः ॥ २ ॥**

इति श्रीहठप्रदीपिकाव्याख्यायां ज्योत्स्नाभिधायां
ब्रह्मानन्दकृतायां द्वितीयोपदेशः ॥ २ ॥

**ज्योतीरूपमशेषबीजमखिलं देदीप्यमानं परं**
**तत्त्वं तत्पदमेति वस्तु परमं वाच्यं किमत्राधिकम् ॥४१॥**

अर्धोन्मीलितेति। अर्धमुन्मीलिते अर्धोन्मीलिते अर्धोन्मीलिते लोचने येन स अर्धोद्घाटितलोचन इत्यर्थः। स्थिरं निश्चलं मनो यस्य स स्थिरमनाः, नासाया नासिकाया अग्रेऽग्रभागे नासिकायां द्वादशाङ्गुलपर्यन्ते वा दत्ते प्रहिते ईक्षणे येन स नासाग्रदत्तेक्षणः। तथाऽऽह वसिष्ठः—'द्वादशाङ्गुलपर्यन्ते नासाग्रे विमलेऽम्बरे। संविद्दृशोः प्रशाम्यन्त्योः प्राणस्पन्दो निरुध्यते॥' इति। निःस्पन्दस्य निश्चलस्य भावो निःस्पन्दभावः कायेन्द्रियमनसां निश्चलत्वं तेन चन्द्रार्कौ चन्द्रसूर्यावपि लीनतां लीनस्य भावो लीनता लयस्तमुपनयन्प्रापयन् कायेन्द्रियमनसां निश्चलत्वेन प्राणसंचारमपि स्तम्भयन्नित्यर्थः। तदुक्तं प्राक्। मनो यत्र विलीयेतेत्यादिपूर्वोक्तविशेषणसंपन्नो योगी ज्योतिरिवाखिलप्रकाशकं रूपं यस्य स तथा तमशेषबीजमाकाशाद्युत्पत्तिद्वारा सर्वकारणमखिलं पूर्णं देदीप्यमानमतिशयेन दीप्यत इति देदीप्यमानं तत्तथा स्वप्रकाशं परं कायेन्द्रियमनसां साक्षिणं तत्त्वमनारोपितं वास्तविकमित्यर्थः। तदिदमिति वक्तुमशक्यं पद्यते गम्यते योगिभिरिति पदं परमं सर्वोत्कृष्टं वस्तु आत्मस्वरूपम् एति प्राप्नोति। उन्मन्य-

वस्थायां स्वस्वरूपावस्थितो योगी भवतीत्यर्थः। अत्राधिकं किं वाच्यम्? अपरं वस्तु प्राप्नोतीत्यत्र किं वक्तव्यमित्यर्थः ॥४१॥

**दिवा न पूजयेल्लिङ्गं रात्रौ चैव न पूजयेत्।**
**सर्वदा पूजयेल्लिङ्गं दिवारात्रिनिरोधतः ॥ ४२ ॥**

उन्मनीभावनायाः कालनियमाभावमाह—दिवा नेति। दिवा सूर्यसंचारे लिङ्गं सर्वकारणमात्मानम्, 'एतस्मादात्मन आकाशः संभूतः' इत्यादिश्रुतेः। न पूजयेत् न भावयेत्। ध्यानमेवात्मपूजनम्। तदुक्तं वासिष्ठे—'ध्यानोपहार एवात्मा ध्यानमस्य महार्चनम्। विना तेनेतरेणायमात्मा लभ्यत एव नो॥' इति। रात्रौ चन्द्रसंचारे च नैव पूजयेन्नैव भावयेत्, चन्द्रसूर्यसंचारे चित्तस्थैर्याभावात्। 'चले वाते चलं चित्तम्' इत्युक्तत्वात्। दिवारात्रिनिरोधतः सूर्यचन्द्रौ निरुध्य। ल्यब्लोपे पञ्चमी। तस्यास्तसिल्। सर्वदा सर्वस्मिन् काले लिङ्गम् आत्मानं पूजयेद्भावयेत्। सूर्यचन्द्रयोर्निरोधे कृते सुषुम्णान्तर्गते प्राणे मनःस्थैर्यात्। तदुक्तम्—'सुषुम्णान्तर्गते वायौ मनःस्थैर्यं प्रजायते' इति ॥ ४२ ॥

**अथ खेचरी—**

**सव्यदक्षिणनाडिस्थो मध्ये चरति मारुतः।**
**तिष्ठते खेचरी मुद्रा तस्मिन्स्थाने न संशयः ॥ ४३ ॥**

खेचरीमाह——सव्येति । सव्यदक्षिणनाडिस्थो वामतदितरनाडिस्थो मारुतो वायुर्यत्र मध्ये चरति यस्मिन्मध्यप्रदेशे गच्छति तस्मिन् स्थाने तस्मिन् प्रदेशे खेचरी मुद्रा तिष्ठते स्थिरा भवति । 'प्रकाशनस्थेयाख्ययोश्च' इत्यात्मनेपदम् । न संशयः उक्तेऽर्थे संदेहो नास्तीत्यर्थः ॥ ४३ ॥

**इडापिङ्गलयोर्मध्ये शून्यं चैवानिलं ग्रसेत् ।**
**तिष्ठते खेचरी मुद्रा तत्र सत्यं पुनः पुनः ॥ ४४ ॥**

इडापिङ्गलयोरिति । इडापिङ्गलयोः सव्यदक्षिणनाड्योर्मध्ये यच्छून्यं खं कर्तृ अनिलं प्राणवायुं यत्र ग्रसेत् । शून्ये प्राणस्य स्थिरीभाव एव ग्रासः । तत्र तस्मिन् शून्ये खेचरी मुद्रा तिष्ठते । पुनः पुनः सत्यमिति योजना ॥ ४४ ॥

**सूर्याचन्द्रमसोर्मध्ये निरालम्बान्तरे पुनः ।**
**संस्थिता व्योमचक्रे या सा मुद्रा नाम खेचरी ॥४५॥**

सूर्याचन्द्रमसोरिति । सूर्याचन्द्रमसोरिडापिङ्गलयोर्मध्ये निरालम्बं यदन्तरमवकाशस्तत्र । पुनः पादपूरणे । व्योम्नां खानां चक्रे समुदाये । भ्रूमध्ये सर्वखानां समन्वयात् । तदुक्तं पञ्चस्रोतःसमन्वित इति । या संस्थिता सा मुद्रा खेचरी नाम ॥ ४५ ॥

**सोमाद्यत्रोदिता धारा साक्षात्सा शिववल्लभा ।**
**पूरयेदतुलां दिव्यां सुषुम्णां पश्चिमे मुखे ॥ ४६ ॥**

सोमादिति । सोमाच्चन्द्राद्यत्र यस्यां खेचर्यां धाराऽमृतधारा उदितोद्भूता सा खेचरी साक्षाच्छिववल्लभा शिवस्य प्रियेति पूर्वेणान्वयः । अतुलां निर्मलां निरुपमां दिव्यां सर्वनाडयुत्तमां सुषुम्णां पश्चिमे मुखे पूरयेत् । जिह्वयेति शेषः ॥ ४६ ॥

**पुरस्ताच्चैव पूर्येत निश्चिता खेचरी भवेत् ।**
**अभ्यस्ता खेचरी मुद्राऽप्युन्मनी संप्रजायते ॥ ४७ ॥**

पुरस्ताच्चैवेति । पुरस्ताच्चैव पूर्वतोऽपि पूर्येत । सुषुम्णां प्राणेनेति शेषः । यदि तर्हि निश्चिताऽसंदिग्धा खेचरी खेचर्याख्या मुद्रा भवेदिति । यदि तु पुरस्तात्प्राणेन न पूर्येत जिह्वामात्रेण पश्चिमतः पूर्येत तर्हि मूढावस्थाजनिका । न निश्चिता खेचरी स्यादिति भावः । खेचरीमुद्राऽप्यभ्यस्ता सती उन्मनी संप्रजायते चित्तस्य ध्येयाकारावेशात्तुर्याऽवस्था भवतीत्यर्थः ॥ ४७ ॥

**भ्रुवोर्मध्ये शिवस्थानं मनस्तत्र विलीयते ।**
**ज्ञातव्यं तत्पदं तुर्यं तत्र कालो न विद्यते ॥ ४८ ॥**

भ्रुवोरिति । भ्रुवोर्मध्ये भ्रुवोरन्तराले शिवस्थानं शिवस्येश्वरस्य स्थानं शिवस्य सुखरूपस्यात्मनोऽवस्थानमिति शेषः । तत्र तस्मिन् शिवे मनो लीयते । शिवाकारवृत्तिप्रवाहवद्भवति तच्चित्तलयरूपं तुर्यं पदं जाग्रत्स्वप्नसुषुप्तिभ्यश्चतुर्थकाख्यं

**बाह्यवायुर्यथा लीनस्तथा मध्यो न संशयः ।**
**स्वस्थाने स्थिरतामेति पवनो मनसा सह ॥ ॥५१॥**

बाह्येति । बाह्यो देहाद्बहिर्भवो वायुर्यथा लीनो भवति खेचर्याम् । तस्यान्तः प्रवृत्त्यभावात् । तथा मध्यो देहमध्यवर्ती वायुर्लीनो भवति । तस्य बहिः प्रवृत्त्यभावात् । न संशयः । अस्मिन्नर्थे संदेहो नास्तीत्यर्थः । स्थीयते स्थिरीभूयतेऽस्मिन्निति स्थानं स्वस्य प्राणस्य स्थानं स्थैर्याधिष्ठानं ब्रह्मरन्ध्रं तत्र मनसा चित्तेन सह पवनः प्राणः स्थिरतां निश्चलतामेति प्राप्नोति ॥ ५१ ॥

**एवमभ्यसमानस्य वायुमार्गे दिवानिशम् ।**
**अभ्यासाज्जीर्यते वायुर्मनस्तत्रैव लीयते ॥ ५२ ॥**

एवमुक्तप्रकारेण वायुमार्गे प्राणमार्गे सुषुम्णायामित्यर्थः । दिवानिशं रात्रिंदिवमभ्यसमानस्याभ्यासं कुर्वतो योगिनोऽभ्यासाद्यत्र यस्मिन्नाधारे वायुः प्राणो जीर्यते क्षीयते लीयते इत्यर्थः । तत्रैव वायोर्लयाधिष्ठाने मनश्चित्तं लीयते जीर्यत इत्यर्थः ॥ ५२ ॥

**अमृतैः प्लावयेद्देहमापादतलमस्तकम् ।**
**सिध्यत्येव महाकायो महाबलपराक्रमः ॥ ५३ ॥**
**इति खेचरी ।**

ज्ञातव्यम् । तत्र तस्मिन् पदे कालो मृत्युर्न विद्यते । यद्वा सूर्यचन्द्रयोर्निरोधादायुःक्षयकारकः कालः समयो न विद्यत इत्यर्थः । तदुक्तम्—'भोक्त्री सुषुम्णा कालस्य' इति ॥४८॥

**अभ्यसेत्खेचरीं तावद्यावत्स्याद्योगनिद्रितः ।**
**संप्राप्तयोगनिद्रस्य कालो नास्ति कदाचन ॥ ४९ ॥**

अभ्यसेदिति । तावत्खेचरीं मुद्रामभ्यसेत् । यावद्योगनिद्रितः, योगः सर्ववृत्तिनिरोधः सैव निद्रा योगनिद्राऽस्य संजाता इति योगनिद्रितः तादृशः स्यात् । संप्राप्ता योगनिद्रा येन स संप्राप्तयोगनिद्रस्तस्य कदाचन कस्मिंश्चिदपि समये कालो मृत्युर्नास्ति ॥ ४९ ॥

**निरालम्बं मनः कृत्वा न किंचिदपि चिन्तयेत् ।**
**स बाह्याभ्यन्तरे व्योम्नि घटवत्तिष्ठति ध्रुवम् ॥५०॥**

निरालम्बमिति । यो निरालम्बमालम्बशून्यं मनः कृत्वा किंचिदपि न चिन्तयेत् खेचरीमुद्रायां जायमानायां ब्रह्माकारामपि वृत्तिं परवैराग्येण परित्यजेदित्यर्थः । स योगी बाह्यभ्यन्तरे बाह्ये बहिर्भवे आभ्यन्तरेऽभ्यन्तर्भवे च व्योम्नच्याकाशे घटवत्तिष्ठति । ध्रुवं निश्चितमेतत् । यथाऽऽकाशे घटो बहिरन्तश्चाकाशपूर्णो भवति तथा खेचर्यामालम्बनपरित्यागेन योगी ब्रह्मणा पूर्णस्तिष्ठतीत्यर्थः ॥ ५० ॥

**बाह्यवायुर्यथा लीनस्तथा मध्यो न संशयः ।**
**स्वस्थाने स्थिरतामेति पवनो मनसा सह ॥ ॥५१॥**

बाह्येति । बाह्यो देहाद्बहिर्भवो वायुर्यथा लीनो भवति खेचर्याम् । तस्यान्तः प्रवृत्त्यभावात् । तथा मध्यो देहमध्यवर्ती वायुर्लीनो भवति । तस्य बहिः प्रवृत्त्यभावात् । न संशयः । अस्मिन्नर्थे संदेहो नास्तीत्यर्थः । स्थीयते स्थिरीभूयतेऽस्मिन्निति स्थानं स्वस्य प्राणस्य स्थानं स्थैर्याधिष्ठानं ब्रह्मरन्ध्रं तत्र मनसा चित्तेन सह पवनः प्राणः स्थिरतां निश्चलतामेति प्राप्नोति ॥ ५१ ॥

**एवमभ्यसमानस्य वायुमार्गे दिवानिशम् ।**
**अभ्यासाज्जीर्यते वायुर्मनस्तत्रैव लीयते ॥ ५२ ॥**

एवमुक्तप्रकारेण वायुमार्गे प्राणमार्गे सुषुम्णायामित्यर्थः । दिवानिशं रात्रिंदिवमभ्यसमानस्याभ्यासं कुर्वतो योगिनोऽभ्यासाद्यत्र यस्मिन्नाधारे वायुः प्राणो जीर्यते क्षीयते लीयते इत्यर्थः । तत्रैव वायोर्लयाधिष्ठाने मनश्चित्तं लीयते जीर्यत इत्यर्थः ॥ ५२ ॥

**अमृतैः प्लावयेद्देहमापादतलमस्तकम् ।**
**सिध्यत्येव महाकायो महाबलपराक्रमः ॥ ५३ ॥**
**इति खेचरी ।**

अमृतैरिति । अमृतैः सुषिरनिर्गतैः पादतलं च मस्तकं च पादतलमस्तकम् । 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' इत्येकवद्भावः । पादतलमस्तकमभिव्याप्येत्यापादतलमस्तकं देहमाप्लावयेदाप्लावितं कुर्यात् । महानुत्कृष्टः कायो यस्य स महाकायः महान्तौ बलपराक्रमौ यस्येत्येतादृशो योगी सिध्यत्येव । अमृताप्लावनेन सिद्धो भवत्येव ॥ ५३ ॥

**शक्तिमध्ये मनः कृत्वा शक्तिं मानसमध्यगाम् ।**
**मनसा मन आलोक्य धारयेत्परमं पदम् ॥ ५४ ॥**

शक्तिरिति । शक्तिः कुण्डलिनी तस्या मध्ये मनः कृत्वा तस्यां मनो धृत्वा तदाकारं मनः कृत्वेत्यर्थः । शक्तिं मानसमध्यगां कृत्वा । शक्तिध्यानावेशाच्छक्तिं मनस्येकीकृत्य तेन कुण्डलीं बोधयित्वेति यावत् । 'प्रबुद्धा वह्नियोगेन मनसा मरुता सह' इति गोरक्षोक्तेः । मनसाऽन्तःकरणेन मनः आलोक्य बुद्धिं मनसाऽवलोकनेन स्थिरीकृत्येत्यर्थः । परमं पदं सर्वोत्कृष्टं स्वरूपं धारयेद्धारणाविषयं कुर्यादित्यर्थः ॥ ५४ ॥

**खमध्ये कुरु चात्मानमात्ममध्ये च खं कुरु ।**
**सर्वं च खमयं कृत्वा न किंचिदपि चिन्तयेत् ॥५५॥**

खमध्य इति । खमिव पूर्णं ब्रह्म खं तन्मध्ये आत्मानं स्वस्वरूपं कुरु । ब्रह्माऽहमिति भावयेत्यर्थः । आत्ममध्ये

स्वस्वरूपे च खं पूर्णं ब्रह्म कुरु। अहं ब्रह्मेति च भावयेत्यर्थः। सर्वं च खमयं कृत्वा ब्रह्ममयं विभाव्य किमपि न चिन्तयेत्। अहं ब्रह्मेति ध्यानमपि परित्यजेदित्यर्थः ॥ ५५ ॥

**अन्तः शून्यो बहिः शून्यः शून्यः कुम्भ इवाम्बरे।**
**अन्तः पूर्णो बहिः पूर्णः पूर्णः कुम्भ इवार्णवे ॥५६॥**

एवं समाहितस्य स्वरूपे स्थितिमाह—अन्तः शून्य इति। अन्तः अन्तःकरणे शून्यः। ब्रह्मातिरिक्तवृत्तेरभावाद्द्वितीयशून्यः। बहिरन्तःकरणाद्बहिरपि शून्यः, द्वितीयादर्शनात्। अम्बरे आकाशे कुम्भो घटो यथाऽन्तर्बहिःशून्यस्तद्वदन्तःकरणे हृदाकाशे वायुपूर्णः ब्रह्माकारवृत्तेः सद्भावाद्ब्रह्मवासत्वाद्वा। बहिः पूर्णोऽन्तःकरणाद्बहिर्हृदवकाशाद्बहिर्वा पूर्णः। सत्तया ब्रह्मातिरिक्तवृत्तेरभावाद्ब्रह्मपूर्णत्वाद्वा। अर्णवे समुद्रे कुम्भो घटो यथा सर्वतो जलपूर्णो भवत्येवं समाधिनिष्ठो योगी ब्रह्मपूर्णो भवतीत्यर्थः ॥ ५६ ॥

**बाह्यचिन्ता न कर्तव्या तथैवान्तरचिन्तनम्।**
**सर्वचिन्तां परित्यज्य न किंचिदपि चिन्तयेत् ॥५७॥**

बाह्यचिन्तेति। समाहितेन योगिनेत्यध्याहारः। बाह्यचिन्ता बाह्यविषया चिन्ता न कर्तव्या। तथैव बाह्यचिन्ताकरणवदान्तरचिन्तनमान्तराणां मनसा परिकल्पितानामाशामोदक-

सौधवाटिकादीनां चिन्तनं न कर्तव्यमिति लिङ्गविपरिणामेनान्वयः। सर्वचिन्तां बाह्याभ्यन्तरचिन्तनं परित्यज्य किंचिदपि न चिन्तयेत्परवैराग्येणात्माकारवृत्तिमपि परित्यजेत्। तत्त्यागे स्वरूपावस्थितिरूपा जीवन्मुक्तिर्भवतीति भावः॥ ५७॥

**संकल्पमात्रकलनैव जगत्समग्रं**
**संकल्पमात्रकलनैव मनोविलासः।**
**संकल्पमात्रमतिमुत्सृज निर्विकल्प-**
**माश्रित्य निश्चयमवाप्नुहि राम शान्तिम्॥५८॥**

बाह्याभ्यन्तरचिन्तापरित्यागे शान्तिश्च भवतीत्यत्र वसिष्ठवाक्यं प्रमाणयति—संकल्पेति। संकल्पो मानसिको व्यापारः स एव संकल्पमात्रं तस्य कलनैव रचनैवेदं दृश्यमानं समग्रं जगत्। बाह्यप्रपञ्चो मनोमात्रकल्पित इत्यर्थः। मनसो मानसस्य विलासो नानाविषयाकारकल्पना आशामोदकसौधवाटिकादिकल्पनारूपो विलासः संकल्पमात्रकलनैव। मानसः प्रपञ्चोऽपि संकल्पमात्ररचनैवेत्यर्थः। संकल्पमात्रे बाह्याभ्यन्तरप्रपञ्चे या मतिः सत्यत्वबुद्धिस्तामुत्सृज। तर्हि किं कर्तव्यमित्यत आह—निर्विकल्पेति। विशिष्टः कल्पो विकल्पः। आत्मनि कर्तृत्वभोक्तृत्वसुखित्वसजातीयविजातीयस्वगतभेददेशकालवस्तुपरिच्छेदकल्पनारूपः, तस्मान्निष्क्रान्तो निर्विकल्पस्त-

मात्मानमाश्रित्य धारणादिविषयं कृत्वा हे राम निश्चयमसंदिग्धं शान्तिं परमोपरतिमवाप्नुहि । ततः सुखमपि प्राप्स्यसीति भावः । तदुक्तं भगवता व्यतिरेकेण—'न चाभावयतः शान्तिरशान्तस्य कुतः सुखम्' इति ॥ ५८ ॥

**कर्पूरमनले यद्वत्सैन्धवं सलिले तथा ।**
**तथा संधीयमानं च मनस्तत्त्वे विलीयते ॥ ५९ ॥**

कर्पूरमिति । यद्वद्यथाऽनलेऽग्नौ संधीयमानं संयोज्यमानं कर्पूरं विलीयते विशेषेण लीयते लीनं भवति अग्न्याकारं भवति । यथा सलिले जले संधीयमानं सैन्धवं लवणं विलीयते लवणाकारं परित्यज्य जलाकारं भवति तथा तद्वत्तत्त्वे आत्मनि संधीयमानं कार्यमाणं मनो विलीयते आत्माकारं भवति ॥ ५९ ॥

**ज्ञेयं सर्वं प्रतीतं च ज्ञानं च मन उच्यते ।**
**ज्ञानं ज्ञेयं समं नष्टं नान्यः पन्था द्वितीयकः ॥६०॥**

मनसो विलये जाते द्वैतमपि लीयत इत्याह त्रिभिः—ज्ञेयमिति । सर्वं सकलं ज्ञेयं ज्ञानार्हं प्रतीतं च ज्ञातं च ज्ञानं च इदं सर्वं मन उच्यते । सर्वस्य मनःकल्पनामात्रत्वान्मनःशब्देनोच्यते । ज्ञानं ज्ञेयं च समं मनो विलीयते मनसा सार्धं नष्टं यदि तर्हि द्वितीयकः द्वितीय एव द्वितीयकः पन्था मनोविषयो नास्ति । द्वैतं नास्तीति फलितार्थः ॥ ६० ॥

**मनोदृश्यमिदं सर्वं यत्किंचित्सचराचरम् ।**
**मनसो ह्युन्मनीभावाद् द्वैतं नैवोपलभ्यते ॥ ६१ ॥**

मनोदृश्यमिति । इदमुपलभ्यमानं यत्किंचिद्यत्किमपि चरं जङ्गममचरं स्थावरं चरं चाचरं च चराचरे ताभ्यां सह वर्तत इति सचराचरं यज्जगत्तत्सर्वं मनोदृश्यं मनसा दृश्यम् । मन:संकल्पमात्रमित्यर्थः । मन:कल्पनासत्त्वे प्रतीतेस्तदभावे चाप्रतीतेर्भ्रम एव सर्वं जगत्, भ्रमस्य प्रातीतिकशरीरत्वात् । न च बौद्धमतप्रसङ्गः, भ्रमाधिष्ठानस्य ब्रह्मणः सत्यत्वाभ्युपगमात् । मनस उन्मनीभावाद्विलयाद् द्वैतं भेदः नैवोपलभ्यते नैव प्रतीयते, द्वैतभ्रमहेतोर्मन:संकल्पस्याभावात् । हि तद्धेतावव्ययम् ॥ ६१ ॥

**ज्ञेयवस्तुपरित्यागाद्विलयं याति मानसम् ।**
**मनसो विलये जाते कैवल्यमवशिष्यते ॥ ६२ ॥**

ज्ञेयेति । ज्ञेयं ज्ञानविषयो यद्वस्तु सर्वं चराचरं यद्दृश्यं तस्य परित्यागान्नामरूपात्मकस्य तस्य परिवर्जनाद्विलयं याति सच्चिदानन्दरूपात्माकारं भवति । मनसो विलये जाते सति कैवल्यं केवलस्यात्मनो भावः कैवल्यमवशिष्यते । अद्वितीयात्मस्वरूपमेव शिष्टं भवतीत्यर्थः ॥ ६२ ॥

**एवं नानाविधोपायाः सम्यक्स्वानुभवान्विताः ।**
**समाधिमार्गाः कथिताः पूर्वाचार्यैर्महात्मभिः ॥ ६३ ॥**

एवमिति । एवमन्तर्लक्ष्यं बहिर्दृष्टिरित्याद्युक्तप्रकारेण महान् समाधिपरिशीलनशुद्ध आत्माऽन्तःकरणं येषां ते महात्मानस्तैर्महात्मभिः पूर्वे च ते आचार्याश्च पूर्वाचार्या मत्स्येन्द्रादयस्तैः समाधेश्चित्तवृत्तिनिरोधस्य मार्गाः प्राप्त्युपायाः कथिताः । कीदृशाः समाधिमार्गाः ? नानाविधोपायाः नानाविधा उपायाः साधनानि येषां ते तथा सम्यक् समीचीनतया संशयविपर्ययराहित्येन यः स्वानुभव आत्मानुभवस्तेनान्विता युक्ताः ॥ ६३ ॥

**सुषुम्णायै कुण्डलिन्यै सुधायै चन्द्रजन्मने ।**
**मनोन्मन्यै नमस्तुभ्यं महाशक्त्यै चिदात्मने ॥ ६४ ॥**

सुषुम्णादिभ्यः कृतकृत्यस्ताः प्रणमति—सुषुम्णायै इति । सुषुम्णा मध्यनाडी तस्यै कुण्डलिन्यै आधारशक्त्यै चन्द्राद्भ्रूमध्यस्थाज्जन्म यस्यास्तस्यै सुधायै पीयूषायै मनोन्मन्यै तुर्यावस्थायै चिच्चैतन्यमात्मा स्वरूपं यस्याः सा तथा तस्यै महति जडानां कायेन्द्रियमनसां चैतन्यसंपादकत्वात्सर्वोत्तमा या शक्तिश्चिच्छक्तिः पुरुषरूपा तस्यै । तुभ्यमिति प्रत्येकं संबध्यते । नमः प्रह्वीभावोऽस्तु ॥ ६४ ॥

**अशक्यतत्त्वबोधानां मूढानामपि संमतम् ।**
**प्रोक्तं गोरक्षनाथेन नादोपासनमुच्यते ॥ ६५ ॥**

नानाविधान् समाध्युपायानुक्त्वा नादानुसंधानरूपं मुख्योपायं प्रतिजानीते—अशक्येति। अव्युत्पन्नत्वादशक्यस्तत्त्वबोधस्तत्त्वज्ञानं येषां ते तथा तेषां मूढानामनधीतानां संमतम्। अपिशब्दात्किमुताधीतानामिति गम्यते। गोरक्षनाथेन प्रोक्तमित्यनेन महदुक्तत्वादुपादेयत्वं गम्यते। नादस्यानाहतध्वनेरुपासनेऽनुसंधानरूपं सेवनमुच्यते कथ्यते ॥ ६५ ॥

**श्रीआदिनाथेन सपादकोटि-**
**लयप्रकाराः कथिता जयन्ति।**
**नादानुसंधानकमेकमेव**
**मन्यामहे मुख्यतमं लयानाम् ॥ ६६ ॥**

श्रीआदिनाथेनेति। श्रीआदिनाथेन शिवेन कथिताः प्रोक्ताः पादेन चतुर्थांशेन सह वर्तमानाः कोटिसंख्याका लयप्रकाराश्चित्तलयसाधनभेदा जयन्त्युत्कर्षेण वर्तन्ते। वयं तु नादानुसंधानकं नादानुचिन्तनमेव एकं केवलं लयानां लयसाधनानां मध्ये मुख्यतममतिशयेन मुख्यं मन्यामहे जानीमहे। उत्कृष्टानां लयसाधनानां मध्ये उत्कृष्टतमत्वाद्गोरक्षाभिमतत्वाच्च नादानुसंधानमेव अवश्यं विधेयमिति भावः ॥ ६६ ॥

**मुक्तासने स्थितो योगी मुद्रां संधाय शांभवीम्।**
**शृणुयाद्दक्षिणे कर्णे नादमन्तःस्थमेकधीः ॥ ६७ ॥**

शांभवीमुद्रया नादानुसंधानमाह—मुक्तासन इति । मुक्तासने सिद्धासने स्थितो योगी शांभवीं मुद्रामन्तर्लक्ष्यं बहिर्दृष्टिरित्यादिनोक्तां संधाय कृत्वा । एकधीरेकाग्रचित्तः सन् दक्षिणे कर्णेऽन्तःस्थसुषुम्णानाड्यां सन्तमेव नादं शृणुयात् । तदुक्तं त्रिपुरासारसमुच्चये—'आदौ मत्तालिमालाजनितरवसमस्तारसंस्कारकारी नादोऽसौ वांशिकस्यानिलभरितलसद्वंशनिःस्वानतुल्यः । घण्टानादानुकारी तदनु च जलधिध्वानधीरो गभीरो गर्जन्पर्जन्यघोषः पर इह कुहरे वर्तते ब्रह्मनाड्याः ॥' इति ॥६७॥

**श्रवणपुटनयनयुगलघ्राणमुखानां निरोधनं कार्यम् ।**
**शुद्धसुषुम्णासरणौ स्फुटममलः श्रूयते नादः ॥६८॥**

पराङ्मुखीमुद्रया नादानुसंधानमाह—श्रवणेति । श्रवणपुटे नयनयोर्नेत्रयोर्युगलं युग्मं घ्राणशब्देन घ्राणपुटे मुखमास्यम् । एषां द्वन्द्वे प्राण्यङ्गत्वादेकवद्भावे प्राप्तेऽपि सर्वस्यापि द्वन्द्वैकवद्भावस्य वैकल्पिकत्वान्न भवति । तेषां निरोधनं कराङ्गुलिभिः कार्यम् । निरोधनं चेत्थम्—'अङ्गुष्ठाभ्यामुभौ कर्णौ तर्जनीभ्यां च चक्षुषी । नासापुटौ तथाऽनाम्न्या प्रच्छाद्य करणानि च ॥' इति । चकारात्तदन्याभ्यां मुखं प्रच्छाद्येति समुच्चीयते । शुद्धा प्राणायामैर्मलरहिता या सुषुम्णासरणिः सुषुम्णापद्धतिस्तस्याममलो नादः स्फुटं व्यक्तं श्रूयते ॥ ६८ ॥

**आरम्भश्च घटश्चैव तथा परिचयोऽपि च ।**
**निष्पत्तिः सर्वयोगेषु स्यादवस्थाचतुष्टयम् ॥ ६९ ॥**

अथ नादस्य चतस्रोऽवस्थाः प्राह—आरम्भश्चेति । आरम्भावस्था घटावस्था परिचयावस्था निष्पत्त्यवस्था इति सर्वयोगेषु सर्वेषु चित्तवृत्तिनिरोधोपायेषु शांभव्यादिषु व्यवस्थाचतुष्टयं स्यात् । चचैवतथापिचाः पादपूरणार्थाः ॥६९ ॥

**अथारम्भावस्था—**

**ब्रह्मग्रन्थेर्भवेद्भेदो ह्यानन्दः शून्यसंभवः ।**
**विचित्रः क्वणको देहेऽनाहतः श्रूयते ध्वनिः ॥ ७० ॥**

तत्रारम्भावस्थामाह—ब्रह्मग्रन्थेरिति । ब्रह्मग्रन्थेरनाहतचक्रे वर्तमानाया भेदः प्राणायामाभ्यासेन भेदनं यदा भवेत्तदेति यत्तदोरध्याहारः । आनन्दयतीत्यानन्दः आनन्दजनकः शून्ये हृदाकाशे संभवतीति शून्यसंभवो हृदाकाशोत्पन्नो विचित्रो नानाविधः क्वणो भूषणनिनदः स एव क्वणकः । भूषणनिनदसदृश इत्यर्थः । 'भूषणानां तु शिञ्जितम्' 'निक्काणो निक्वणः क्वाणः क्वणः क्वणनमित्यपि' इत्यमरः । अनाहतो ध्वनिरनाहतो निर्ह्लादो देहे देहमध्ये श्रूयते श्रवणविषयो भवतीत्यर्थः ॥ ७० ॥

**दिव्यदेहश्च तेजस्वी दिव्यगन्धस्त्वरोगवान् ।**
**संपूर्णहृदयः शून्य आरम्भे योगवान्भवेत् ॥ ७१ ॥**

दिव्यदेह इति। शून्ये हृदाकाशे य आरम्भो नादारम्भस्तस्मिन्सति हृदाकाशविशुद्ध्याकाशभ्रूमध्याकाशाः शून्यातिशून्यमहाशून्यशब्दैर्व्यवह्रियन्ते योगिभिः। संपूर्णहृदयः प्राणवायुना सम्यक् पूर्णं हृदयं यस्य स तथा आनन्देन पूर्णे हृदये योगवान् योगी दिव्यो रूपलावण्यबलसंपन्नो देहो यस्य स दिव्यदेहः तेजस्वी प्रतापवान् दिव्यगन्धः दिव्य उत्तमो गन्धो यस्य स तथा अरोगवान् रोगरहितो भवेदिति संबन्धः ॥ ७१ ॥

**अथ घटावस्था—**

**द्वितीयायां घटीकृत्य वायुर्भवति मध्यगः।**
**दृढासनो भवेद्योगी ज्ञानी देवसमस्तदा ॥ ७२ ॥**

घटावस्थामाह—द्वितीयायामिति। द्वितीयायां घटावस्थायां वायुः प्राणः घटीकृत्य आत्मना सहापानं नादबिन्दू चैकीकृत्य मध्यगो मध्यचक्रगतः कण्ठस्थाने मध्यचक्रम्। तदुक्तमत्रैव जालंधरबन्धे—'मध्यचक्रमिदं ज्ञेयं षोडशाधारबन्धनम्' इति। यदा भवेदित्यध्याहारः। तदाऽस्यामवस्थायां योगी योगाभ्यासी दृढमासनं यस्य स दृढासनः स्थिरासनो ज्ञानी पूर्वापेक्षया कुशलबुद्धिर्देवसमो रूपलावण्याधिक्याद्देवतुल्यो भवेत्। तदुक्तमीश्वरोक्ते राजयोगे—'प्राणापानौ नादबिन्दू जीवात्मपरमात्मनोः। मिलित्वा घटते यस्मात्तस्मात्स घट उच्यते ॥' इति ॥ ७२ ॥

**विष्णुग्रन्थेस्ततो भेदात्परमानन्दसूचकः ।**
**अतिशून्ये विमर्दश्च भेरीशब्दस्तथा भवेत् ॥ ७३ ॥**

विष्णुग्रन्थेरिति । ततो ब्रह्मग्रन्थिभेदनानन्तरं विष्णुग्रन्थेः कण्ठे वर्तमानाया भेदात्कुम्भकैर्भेदनात्परमानन्दस्य भाविनो ब्रह्मानन्दस्य सूचको ज्ञापकः अतिशून्ये कण्ठावकाशे विमर्दोऽनेकनादसंमर्दो भेर्याः शब्द इव शब्दो भेरीशब्दो भेरीनादश्च तदा तस्मिन्काले भवेत् ॥ ७३ ॥

**तृतीयायां तु विज्ञेयो विहायोमर्दलध्वनिः ।**
**महाशून्यं तदा याति सर्वसिद्धिसमाश्रयम् ॥ ७४ ॥**

परिचयावस्थामाह सार्धद्वाभ्याम्—तृतीयायां परिचयावस्थायां विहायोमर्दलध्वनिर्विहायसि भ्रूमध्याकाशे मर्दलस्य वाद्यविशेषस्य ध्वनिरिव ध्वनिर्विज्ञेयो विशेषेण ज्ञानार्हो भवति । तदा तस्यामवस्थायां सर्वसिद्धिसमाश्रयं सर्वासां सिद्धीनामणिमादीनां समाश्रयं स्थानम् । तत्र संयमादणिमादिप्राप्तेः महाशून्यं भ्रूमध्याकाशं याति गच्छति प्राण इति शेषः ॥७४॥

**चित्तानन्दं तदा जित्वा सहजानन्दसंभवः ।**
**दोषदुःखजराव्याधिक्षुधानिद्राविवर्जितः ॥ ७५ ॥**

चित्तानन्दमिति । चित्तानन्दं नादविषयान्तःकरणवृत्तिजन्यसुखं जित्वाऽभिभूय सहजानन्दसंभवः सहजानन्दः स्वाभावि-

कात्मसुखं तस्य संभव आविर्भावः स दोषा वातपित्तकफा दुःखं तज्जन्या वेदना आध्यात्मिकादि च जरा वृद्धावस्था व्याधिर्ज्वरादिः क्षुधा बुभुक्षा निद्रा स्वाप एतैर्विवर्जितो रहितस्तदा योगी भवतीति ॥ ७५ ॥

**रुद्रग्रन्थिं यदा भित्त्वा शर्वपीठगतोऽनिलः ।**
**निष्पत्तौ वैणवः शब्दः क्वणद्वीणाक्वणो भवेत् ॥७६॥**

तदा, कदेत्यपेक्षायामाह—रुद्रेति । यदा रुद्रग्रन्थिं भित्त्वा । आज्ञाचक्रे रुद्रग्रन्थिः शर्वस्येश्वरस्य पीठं स्थानं भ्रूमध्यं तत्र गतः प्राप्तोऽनिलः प्राणो भवति तदा निष्पत्त्यवस्थामाह—निष्पत्ताविति । निष्पत्तौ निष्पत्त्यवस्थायाम् । ब्रह्मरन्ध्रे गते प्राणे निष्पत्त्यवस्था भवति । वैणवः वेणोरयं वैणवो वंशसंबन्धी शब्दो निनादः क्वणन्ती शब्दायमाना या वीणा तस्याः क्वणः शब्दो भवेत् ॥ ७६ ॥

**एकीभूतं तदा चित्तं राजयोगाभिधानकम् ।**
**सृष्टिसंहारकर्ताऽसौ योगीश्वरसमो भवेत् ॥ ७७ ॥**

तदा तस्यामवस्थायां चित्तमन्तःकरणमेकीभूतमेकविषयीभूतम् । विषयविषयिणोरभेदोपचारात् । तद्राजयोगाभिधानकं राजयोग इत्यभिधानं यस्य तद्राजयोगाभिधानकं चित्तस्यैकाग्रतैव राजयोग इत्यर्थः । सृष्टिसंहारेति । असौ नादानुसंधानपरो

योगी सृष्टिसंहारकर्ता सृष्टिं संहारं च करोतीति तादृशः । अत एवेश्वरसम ईश्वरतुल्यो भवेत् ॥ ७७ ॥

**अस्तु वा माऽस्तु वा मुक्तिरत्रैवाखण्डितं सुखम् ।**
**लयोद्भवमिदं सौख्यं राजयोगादवाप्यते ॥ ७८ ॥**
**राजयोगमजानन्तः केवलं हठकर्मिणः ।**
**एतानभ्यासिनो मन्ये प्रयासफलवर्जितान् ॥ ७९ ॥**

अस्तु वेति । राजयोगमिति । उभौ प्राग्व्याख्यातौ ॥ ७८ ॥ ७९ ॥

**उन्मन्यवाप्तये शीघ्रं भ्रूध्यानं मम संमतम् ।**
**राजयोगपदं प्राप्तुं सुखोपायोऽल्पचेतसाम् ।**
**सद्यः प्रत्ययसंधायी जायते नादजो लयः ॥ ८० ॥**

उन्मन्यवाप्तय इति । शीघ्रं त्वरितमुन्मन्या उन्मन्यवस्थाया अवाप्तये प्राप्त्यर्थं भ्रूध्यानं भ्रुवोर्ध्यानं भ्रूमध्ये ध्यानं मम स्वात्मारामस्य संमतम् । राजयोगो योगानां राजा तदेव पदं राजयोगपदं तुर्यावस्थाख्यं प्राप्तुं लब्धुं पूर्वोक्तभ्रूध्यानरूपः सुखोपायः सुखसाध्य उपायः सुखोपायः अल्पचेतसामल्पबुद्धीनामपि । किमुतान्येषामित्यभिप्रायः । नादजः नादाज्जातो लयश्चित्तविलयः सद्यः शीघ्रं प्रत्ययं प्रतीतिं संदधातीति प्रत्ययसंधायी प्रतीतिकरो जायते प्रादुर्भवति ॥ ८० ॥

**नादानुसंधानसमाधिभाजां**
**योगीश्वराणां हृदि वर्धमानम् ।**
**आनन्दमेकं वचसामगम्यं**
**जानाति तं श्रीगुरुनाथ एकः ॥ ८१ ॥**

नादानुसंधानेति । नादस्यानाहतध्वनेरनुसंधानमनुचिन्तनं तेन समाधिश्चित्तैकाग्र्यं तं भजन्तीति नादानुसंधानसमाधिभाजस्तेषां योगिषु योगयुक्तेष्वीश्वराः समर्थास्तेषां हृदि हृदये वर्धत इति वर्धमानस्तं वर्धमानं वचसां वाचामगम्यम् इदमिति वक्तुमशक्यं तं योगशास्त्रप्रसिद्धमेकं मुख्यमानन्दमाह्लादमेकोऽनन्यः श्रीगुरुनाथः श्रीमान् गुरुरेव नाथो जानाति वेत्ति । एतेन नादानुसंधानानन्दो गुरुगम्य एवेति सूचितम् ॥ ८१ ॥

**कर्णौ पिधाय हस्ताभ्यां यं शृणोति ध्वनिं मुनिः ।**
**तत्र चित्तं स्थिरीकुर्याद्यावत्स्थिरपदं व्रजेत् ॥ ८२ ॥**

नादानुसंधानात्प्रत्याहारादिक्रमेण समाधिमाह— कर्णावित्यादिभिः । मुनिर्मननशीलो योगी हस्ताभ्यामित्यनेन हस्ताङ्गुष्ठौ लक्ष्येते । ताभ्यां कर्णौ श्रोत्रे पिधाय । हस्ताङ्गुष्ठौ श्रोत्रविवरयोः कृत्वेत्यर्थः । यं ध्वनिमनाहतनिःस्वनं शृणोत्याकर्णयति तत्र तस्मिन्ध्वनौ चित्तं स्थिरीकुर्यादस्थिरं स्थिरं संपद्यमानं कुर्यात् । यावत्स्थिरं पदं स्थिरपदं तुर्याख्यं गच्छेत् ।

तदुक्तम् —‘ तुर्यावस्थाचिदभिव्यञ्जकनादस्य वेदनं प्रोक्तम् ’ इति नादानुसंधानेन वायुस्थैर्यमणिमादयोऽपि भवन्ति । उक्तं च त्रिपुरासारसमुच्चये—‘ विजितो भवतीह तेन वायुः सहजो यस्य समुत्थितः प्रणादः । अणिमादिगुणा भवन्ति तस्यामितपुण्यं च महागुणोदयस्य ॥ सुरराजतनूजवैरिरन्ध्रे विनिरुध्य स्वकराङ्गुलिद्वयेन । जलधेरिव धीरनादमन्तः प्रसरन्तं सहसा शृणोति मर्त्यः ॥ ’ इति । सुरराज इन्द्रस्तस्य तनूजोऽर्जुनस्तस्य वैरी कर्णस्तद्रन्ध्रे । स्पष्टमन्यत् ॥ ८२ ॥

**अभ्यस्यमानो नादोऽयं बाह्यमावृणुते ध्वनिम् ।**
**पक्षाद्विक्षेपमखिलं जित्वा योगी सुखी भवेत् ॥८३॥**

अभ्यस्यमान इति । अभ्यस्यमानोऽनुसंधीयमानोऽयं नादोऽनाहताख्यो बाह्यं ध्वनिं बहिर्भवं शब्दमावृणुते श्रुत्योर्विषयम् । योगी नादाभ्यासी पक्षान्मासार्धादखिलं सर्वं विक्षेपं चित्तचाञ्चल्यं जित्वाऽभिभूय सुखी स्वानन्दो भवेत् ॥ ८३ ॥

**श्रूयते प्रथमाभ्यासे नादो नानाविधो महान् ।**
**ततोऽभ्यासे वर्धमाने श्रूयते सूक्ष्मसूक्ष्मकः ॥ ८४ ॥**

श्रूयत इति । प्रथमाभ्यासे पूर्वाभ्यासे नानाविधोऽनेकविधो महान् जलधिजीमूतभेर्यादिसदृशो नादोऽनाहतस्वनः श्रूयते आकर्ण्यते । ततोऽनन्तरमभ्यासे नादानुसंधानाभ्यासे वर्धमाने

सति सूक्ष्मसूक्ष्मकः सूक्ष्मः सूक्ष्म एव श्रूयते श्रवणविषयो भवति ॥ ८४ ॥

**आदौ जलधिजीमूतभेरीझर्झरसंभवाः ।**
**मध्ये मर्दलशङ्खोत्था घण्टाकाहलजास्तथा ॥ ८५ ॥**

नानाविधं नादमाह द्वाभ्याम्—आदाविति । आदौ वायोर्ब्रह्मरन्ध्रगमनसमये जलधिः समुद्रो जीमूतो मेघो भेरी वाद्यविशेषः । 'भेरी स्त्री दुन्दुभिः पुमान्' इत्यमरः । झर्झरो वाद्यविशेषः । 'वाद्यप्रभेदा डमरुमड्डुडिण्डिमझर्झराः । मर्दलः पणवोऽन्येऽपि' इत्यमरः । जलधिप्रमुखेभ्यः संभव इव संभवो येषां ते तथा मध्ये ब्रह्मरन्ध्रे वायोः स्थैर्यानन्तरं मर्दलो वाद्यविशेषः शङ्खो जलजस्ताभ्यामुत्था इव मर्दलशङ्खोत्थाः । घण्टाकाहलौ वाद्यविशेषौ ताभ्यां जाता इव घण्टाकाहलजाः ॥

**अन्ते तु किङ्किणीवंशवीणाभ्रमरनिःस्वनाः ।**
**इति नानाविधा नादाः श्रूयन्ते देहमध्यगाः ॥ ८६ ॥**

अन्ते त्विति । अन्ते तु प्राणस्य ब्रह्मरन्ध्रे बहुस्थैर्यानन्तरं तु किङ्किणी क्षुद्रघण्टिका वंशो वेणुः वीणा तन्त्री भ्रमरो मधुपः तेषां निःस्वना इति पूर्वोक्ता नानाविधा अनेकप्रकारका देहस्य मध्यं गताः प्राप्ताः श्रूयन्ते ॥ ८६ ॥

**महति श्रूयमाणेऽपि मेघभेर्यादिके ध्वनौ ।**
**तत्र सूक्ष्मात्सूक्ष्मतरं नादमेव परामृशेत् ॥ ८७ ॥**

महतीति । मेघश्च भेरी च ते आदी यस्य स मेघभेर्यादिकस्तस्मिन् । मेघभेरीशब्दौ तज्जन्यनिर्घोषपरौ । महति बहुले ध्वनौ निनादे श्रूयमाणे आकर्ण्यमाने सत्यपि तत्र तेषु नादेषु सूक्ष्मात्सूक्ष्मतरमतिसूक्ष्मं नादमेव परामृशेच्चिन्तयेत् । सूक्ष्मस्य नादस्य चिरस्थायित्वात्तत्रासक्तचित्तश्चिरं स्थिरमतिर्भवेदिति भावः ॥ ८७ ॥

**घनमुत्सृज्य वा सूक्ष्मे सूक्ष्ममुत्सृज्य वा घने ।**
**रममाणमपि क्षिप्तं मनो नान्यत्र चालयेत् ॥ ८८ ॥**

घनमिति । घनं महान्तं नादं मेघभेर्यादिकमुत्सृज्य घने वा नादे रममाणं घनसूक्ष्मान्यतरनादग्रहणपरित्यागाभ्यां क्रीडन्तमपि क्षिप्तं रजसाऽत्यन्तचञ्चलं मनोऽन्यत्र विषयान्तरे न चालयेन्न प्रेरयेत् । क्षिप्तं मनो विषयान्तरासक्तं न समाधीयते, नादेषु रममाणं तु समाधीयत इति भावः ॥ ८८ ॥

**यत्र कुत्रापि वा नादे लगति प्रथमं मनः ।**
**तत्रैव सुस्थिरीभूय तेन सार्धं विलीयते ॥ ८९ ॥**

यत्रेति । वा अथ वा यत्र कुत्रापि नादे यस्मिन्कस्मिंश्चिद्घने सूक्ष्मे वा नादे प्रथमं पूर्वं मनो लगति लग्नं भवति

तत्रैव तस्मिन्नेव नादे सुस्थिरीभूय सम्यक् स्थिरं भूत्वा तेन नादेन सार्धं साकं विलीयते लीनं भवतीत्यर्थः । अत्र पूर्ववाक्येन प्रत्याहारो द्वितीयेन धारणा तृतीयेन ध्यानद्वारा समाधिरुक्तः ॥ ८९ ॥

**मकरन्दं पिबन्भृङ्गो गन्धं नापेक्षते यथा ।**
**नादासक्तं तथा चित्तं विषयान्न हि काङ्क्षते ॥९०॥**

मकरन्दमिति । मकरन्दं पुष्परसं पिबन् धयन् भृङ्गो भ्रमरो गन्धं यथा नापेक्षते नेच्छति तथा नादासक्तं नाद आसक्तं चित्तमन्तःकरणं विषयान् विषिण्वन्त्यवबध्नन्ति प्रमातारं स्वसङ्गेनेति विषयाः स्रक्चन्दनवनितादयस्तान् न काङ्क्षते नेच्छति । हीति निश्चये ॥ ९० ॥

**मनोमत्तगजेन्द्रस्य विषयोद्यानचारिणः ।**
**नियमेन समर्थोऽयं निनादनिशिताङ्कुशः ॥ ९१ ॥**

मन इति । विषयः शब्दादिरेवोद्यानं वनं तत्र चरतीति विषयोद्यानचारी तस्य मन एव मत्तगजेन्द्रो दुर्निवारत्वात् । तस्य निनाद एवानाहतध्वनिरेव निशिताङ्कुशः तीक्ष्णाङ्कुशः नियमेन परावर्तने समर्थः शक्तः । एतैः श्लोकैः । ‘ चरतां चक्षुरादीनां विषयेषु यथाक्रमम् । यत्प्रत्याहरणं तेषां प्रत्याहारः

प्रकीर्तितः ' ॥ इन्द्रियाणां विषयेभ्यः प्रत्याहरणं प्रत्याहार इत्युक्तलक्षणः प्रत्याहारः प्रोक्तः ॥ ९१ ॥

**बद्धं तु नादबन्धेन मनः संत्यक्तचापलम् ।**
**प्रयाति सुतरां स्थैर्यं छिन्नपक्षः खगो यथा ॥ ९२ ॥**

बद्धं त्विति । नाद एव बन्धः बध्यतेऽनेनेति बन्धः बन्धनसाधनं तेन स्वशक्त्या स्वाधीनकरणेन बद्धं बन्धनमिव प्राप्तम् । नादधारणादावासक्तमित्यर्थः । अत एव सम्यक् त्यक्तं चापलं क्षणे क्षणे विषयग्रहणपरित्यागरूपं येन तत्तथा मनः सुतरां स्थैर्यं प्रयाति नितरां धारणामेति । तत्र दृष्टान्तमाह— छिन्नौ पक्षौ यस्य तादृशः खे गच्छतीति खगः पक्षी यथा । एतेन । ' प्राणायामेन पवनं प्रत्याहारेण चेन्द्रियम् । वशीकृत्य ततः कुर्याच्चित्तस्थैर्यं शुभाश्रये ' ॥ शुभाश्रये चित्तस्थापनं धारणेत्युक्तलक्षणा धारणा प्रोक्ता ॥ ९२ ॥

**सर्वचिन्तां परित्यज्य सावधानेन चेतसा ।**
**नाद एवानुसंधेयो योगसाम्राज्यमिच्छता ॥ ९३ ॥**

सर्वचिन्तामिति । सर्वेषां बाह्याभ्यन्तरविषयाणां या चिन्ता चिन्तनं तां परित्यज्य त्यक्त्वा सावधानेनैकाग्रेण चेतसा योगानां साम्राज्यं सम्राजो भावः । योगशब्दोऽर्शआद्यजन्तः । राज-

योगित्वमिति यावत् । इच्छता वाञ्छता पुंसा नाद एवानाहतध्वनिरेवानुसंधेयोऽनुचिन्तनीयः । नादाकारवृत्तिप्रवाहः कर्तव्य इत्यर्थः । एतेन । 'तद्रूपप्रत्ययैकाग्र्यसंततिश्चान्यनिस्पृहा । तद्ध्यानं प्रथमैरङ्गैः षड्भिर्निष्पाद्यते नृप' ॥ 'तत्र प्रत्ययैकतानता ध्यानम्' इत्युक्तलक्षणं ध्यानमुक्तम् ॥ ९३ ॥

**नादोऽन्तरङ्गसारङ्गबन्धने वागुरायते ।**
**अन्तरङ्गकुरङ्गस्य वधे व्याधायतेऽपि च ॥ ९४ ॥**

नादोऽन्तरङ्गेति । नादः अन्तरङ्गं मन एव सारङ्गो मृगस्तस्य बन्धने चाञ्चल्यहरणे वागुरायते वागुरेवाचरति । वागुरा जालम् । यथा वागुरा बन्धनेन सारङ्गस्य चाञ्चल्यं हरति तथा नादोऽन्तरङ्गस्य स्वशक्त्या चाञ्चल्यं हरतीत्यर्थः । अन्तरङ्गं मन एव सारङ्गो हरिणस्तस्य बन्धने नानावृत्त्युत्पादनापनयनमेव मनसो बन्धस्तस्मिन् व्याधायते व्याध इवाचरति । यथा व्याधो वागुराबद्धं मृगं हन्ति एवं नादोऽपि स्वासक्तं मनो हन्तीत्यर्थः ॥ ९४ ॥

**अन्तरङ्गस्य यमिनो वाजिनः परिघायते ।**
**नादोपास्तिरतो नित्यमवधार्या हि योगिना ॥ ९५ ॥**

अन्तरङ्गस्येति । यमिनो योगिनोऽन्तरङ्गं मनस्तस्य चपलत्वाद्वाजिनोऽश्वस्य परिघायते वाजिशालाद्वारपरिघ इवा-

चरति नाद इति शेषः । यथा वाजिशालापरिघो वाजिनोऽन्यत्र गतिं रुणद्धि तथा नादोऽन्तरङ्गस्येत्यर्थः । अन्तःकरणाद्योगिना नादस्योपास्तिरुपासना नित्यं प्रत्यहमवधार्याऽवधारणीया । हीति निश्चयेऽव्ययम् ॥ ९५ ॥

**बद्धं विमुक्तचाञ्चल्यं नादगन्धकजारणात् ।**
**मनःपारदमाप्नोति निरालम्बाख्यखेऽटनम् ॥ ९६ ॥**

बद्धमिति । नाद एव गन्धक उपधातुविशेषस्तेन जारणं जारणीकरणं नादगन्धकसंबन्धेन चाञ्चल्यहरणं तस्माद्बद्धं नादैकासक्तं पक्षे गुटिकाकृतिं प्राप्तम् अत एव विमुक्तं त्यक्तं चाञ्चल्यमनेकविषयाकारपरिणामरूपं येन । पक्षे विमुक्तलौल्यं मनःपारदं मन एव पारदं चञ्चलं निरालम्बं ब्रह्म तदेवाख्या यस्य तन्निरालम्बाख्यं तदेव खमपरिच्छिन्नत्वात्तस्मिन्नटनं गमनं तदाकारवृत्तिप्रवाहम् । पक्षे आकाशगमनं प्राप्नोति । यथा बद्धं पारदमाकाशगमनं करोति एवं बद्धं मनो ब्रह्माकारवृत्तिप्रवाहमविच्छिन्नं करोतीत्यर्थः ॥ ९६ ॥

**नादश्रवणतः क्षिप्रमन्तरङ्गभुजङ्गमः ।**
**विस्मृत्य सर्वमेकाग्रः कुत्रचिन्न हि धावति ॥ ९७ ॥**

नादेति । नादस्यानाहतस्वनस्य श्रवणतः श्रवणात् क्षिप्रं द्रुतमन्तरङ्गं मन एव भुजङ्गमः सर्पश्चपलत्वान्नादप्रियत्वाच्च

भुजङ्गमरूपत्वं मनसः । सर्वं विश्वं विस्मृत्य विस्मृतिविषयं कृत्वैकाग्रो नादाकारवृत्तिप्रवाहवान् सन्कुत्रापि विषयान्तरे न हि धावति नैव धावनं करोति। ध्यानोत्तरैः श्लोकैः 'तस्यैव कल्पनाहीनं स्वरूपग्रहणं हि यत्। मनसा ध्याननिष्पाद्यः समाधिः सोऽभिधीयते ॥' इति विष्णुपुराणोक्त-लक्षणः 'तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः' इति पातञ्जलसूत्रोक्तलक्षणेन च संप्रज्ञातलक्षणः समाधिरुक्तः ॥९७॥

**काष्ठे प्रवर्तितो वह्निः काष्ठेन सह शाम्यति ।**
**नादे प्रवर्तितं चित्तं नादेन सह लीयते ॥ ९८ ॥**

काष्ठ इति । काष्ठे दारुणि प्रवर्तितः प्रज्वालितो वह्निः काष्ठेन सह शाम्यति ज्वालारूपं परित्यज्य तन्मात्ररूपेणावतिष्ठते यथा तथा नादे प्रवर्तितं चित्तं नादेन सह लीयते । राजसतामस-वृत्तिनाशात्सत्त्वमात्रावशेषं संस्कारशेषं च भवति । तत्र च मैत्रा-यणीयमन्त्रः—'यथा निरिन्धनो वह्निः स्वयोनावुपशाम्यति । तथा वृत्तिक्षयाच्चित्तं स्वयोनावुपशाम्यति ॥' इति ॥ ९८ ॥

**घण्टादिनादसक्तस्तब्धान्तःकरणहरिणस्य ।**
**प्रहरणमपि सुकरं स्याच्छरसंधानप्रवीणश्चेत् ॥९९॥**

घण्टादीति । घण्टा आदिर्येषां शङ्खमर्दलझर्झरदुन्दुभिजी-मूतादीनां ते घण्टादयस्तेषां नादस्तेषु सक्तः । अत एव

स्तब्धो निश्चलो योऽन्तःकरणमेव हरिणो मृगस्तस्य प्रहरणं नानावृत्तिप्रतिबन्धनमन्तःकरणपक्षे । हरिणपक्षे तु प्रहरणं हननमपि शरवद् द्रुतगामिनो वायोः संधानं सुषुम्णामार्गेण ब्रह्मरन्ध्रे निरोधनम्, पक्षे शरस्य बाणस्य संधानं धनुषि योजनं तस्मिन् प्रवीणः कुशलश्चेत्सुकरं सुखेन कर्तुं शक्यं स्यात् ॥ ९९ ॥

**अनाहतस्य शब्दस्य ध्वनिर्य उपलभ्यते ।**
**ध्वनेरन्तर्गतं ज्ञेयं ज्ञेयस्यान्तर्गतं मनः ।**
**मनस्तत्र लयं याति तद्विष्णोः परमं पदम् ॥ १०० ॥**

अनाहतस्येति । अनाहतस्य शब्दस्यानाहतस्वनस्य यो ध्वनिर्निर्ह्राद उपलभ्यते श्रूयते तस्य ध्वनेरन्तर्गतं ज्ञेयं ज्योतिः स्वप्रकाशचैतन्यं ज्ञेयस्यान्तर्गतं ज्ञेयाकारतामापन्नं मनोऽन्तःकरणं तत्र ज्ञेये मनो विलयं याति परवैराग्येण सकलवृत्तिशून्यं संस्कारशेषं भवति । तद्विष्णोर्विभोरात्मनः परममन्तःकरणवृत्त्युपाधिराहित्यान्निरुपाधिकं पद्यते गम्यते योगिभिरिति पदं स्वरूपम् ॥ १०० ॥

**तावदाकाशसंकल्पो यावच्छब्दः प्रवर्तते ।**
**निःशब्दं तत्परं ब्रह्म परमात्मेति गीयते ॥ १०१ ॥**

तावदिति । यावच्छब्दोऽनाहतध्वनिः प्रवर्तते श्रूयते तावदाकाशस्य सम्यक्कल्पनं भवति । शब्दस्याकाशगुणत्वाद्गुण-

गुणिनोर्भेदाद्वा मनसा सह शब्दस्य विलयान्निःशब्दं शब्दरहितं यत्परं ब्रह्म परब्रह्मशब्दवाच्यं परमात्मेति गीयते परमात्मशब्देन स उच्यते। सर्ववृत्तिविलये यः स्वरूपेणावस्थितः स एव परब्रह्मपरमात्मशब्दाभ्यामुच्यत इति भावः ॥ १०१ ॥

**यत्किंचिन्नादरूपेण श्रूयते शक्तिरेव सा।**
**यस्तत्त्वान्तो निराकारः स एव परमेश्वरः ॥ १०२ ॥**
**इति नादानुसंधानम्।**

यत्किंचिदिति। नादरूपेणानाहतध्वनिरूपेण यत्किंचिच्छ्रूयते आकर्ण्यते सा शक्तिरेव यस्तत्त्वान्तस्तत्त्वानामन्तो लयो यस्मिन् सः तथा निराकार आकाररहितः स एव परमेश्वरः सर्ववृत्तिक्षये स्वरूपावस्थितो यः स आत्मेत्यर्थः। 'काष्ठे प्रवर्तितो वह्निः' इत्यादिभिः श्लोकैः राजयोगापरपर्यायोऽसंप्रज्ञातः समाधिरुक्तः ॥ १०२ ॥

**सर्वे हठलयोपाया राजयोगस्य सिद्धये।**
**राजयोगसमारूढः पुरुषः कालवञ्चकः ॥ १०३ ॥**

सर्वे इति। हठश्च लयश्च हठलयौ तयोरुपाया हठलयोपाया हठोपाया आसनकुम्भकमुद्रारूपा लयोपाया नादानुसंधानशांभवीमुद्रादयः। राजयोगस्य मनसः सर्ववृत्तिनिरोधलक्षणस्य

सिद्धये निष्पत्तये प्रोक्ता इति शेषः । राजयोगसमारूढः सम्यगारूढः प्राप्तवान् यः पुरुषः स कालवञ्चकः कालं मृत्युं वञ्चयति जयतीति तादृशः स्यादिति शेषः ॥ १०३ ॥

**तत्त्वं बीजं हठः क्षेत्रमौदासीन्यं जलं त्रिभिः ।**
**उन्मनी कल्पलतिका सद्य एव प्रवर्तते ॥ १०४ ॥**

तत्त्वमिति । तत्त्वं चित्तं बीजं बीजवदुन्मन्यवस्थाङ्कुराकारेण परिणममानत्वात् । हठः प्राणापानयोरैक्यलक्षणः प्राणायामः क्षेत्रं क्षेत्रे इव प्राणायामे उन्मनीकल्पलतिकोत्पत्तेः । औदासीन्यं परवैराग्यं जलं तस्या उत्पत्तिकारणत्वात् । 'परवैराग्यहेतुकः संस्कारविशेषश्चित्तस्यासंप्रज्ञातः' इति तल्लक्षणात् । एतैस्त्रिभिरुन्मन्यसंप्रज्ञातावस्था सैव कल्पलतिका सकलेष्टसाधनत्वात्सद्य एव शीघ्रमेव प्रवर्तते प्रवृत्ता भवति उत्पन्ना भवति ॥ १०४ ॥

**सदा नादानुसंधानात्क्षीयन्ते पापसंचयाः ।**
**निरञ्जने विलीयेते निश्चितं चित्तमारुतौ ॥ १०५ ॥**

सदेति । सदा सर्वदा नादानुसंधानान्नादानुचिन्तनात्पापसंचयाः पापसमूहाः क्षीयन्ते नश्यन्ति । निरञ्जने निर्गुणे चैतन्ये निश्चितं ध्रुवं चित्तमारुतौ मनःप्राणौ विलीयेते विलीनौ भवतः ॥ १०५ ॥

**शङ्खदुन्दुभिनादं च न शृणोति कदाचन ।**
**काष्ठवज्जायते देह उन्मन्याऽवस्थया ध्रुवम् ॥१०६॥**

उन्मन्यवस्थां प्राप्तस्य योगिनः स्थितिमाहाष्टभिः—शङ्खदुन्दुभीति । शङ्खो जलजो दुन्दुभिर्वाद्यविशेषस्तयोर्नादं घोषं कदाचन कस्मिंश्चिदपि समये न शृणोति । शङ्खदुन्दुभीत्युपलक्षणं नादमात्रस्य । उन्मन्याऽवस्थया देहो ध्रुवं काष्ठवज्जायते । निश्चेष्टत्वादित्यर्थः ॥ १०६ ॥

**सर्वावस्थाविनिर्मुक्तः सर्वचिन्ताविवर्जितः ।**
**मृतवत्तिष्ठते योगी स मुक्तो नात्र संशयः ॥ १०७॥**

जाग्रत्स्वप्नसुषुप्तिमूर्च्छामरणलक्षणाः पञ्च व्युत्थानावस्थाः । ताभिर्विशेषेण मुक्तो रहितः सर्वा याश्चिन्ताः स्मृतयस्ताभिर्विवर्जितो विरहितो यः योगः सकलवृत्तिनिरोधोऽस्यास्तीति योगी तुर्यावस्थावान् स मुक्तो जीवन्नेव मुक्तः । सकलवृत्तिनिरोधे आत्मनः स्वरूपावस्थानात् । तदुक्तं पातञ्जले सूत्रे—'तदा द्रष्टुः स्वरूपेऽवस्थानम्' इति । स्पष्टमन्यत् ॥ १०७ ॥

**खाद्यते न च कालेन बाध्यते न च कर्मणा ।**
**साध्यते न स केनापि योगी युक्तः समाधिना ॥१०८॥**

खाद्यत इति । समाधिना युक्तो योगी कालेन मृत्युना न खाद्यते न भक्ष्यते न हन्यत इत्यर्थः । कर्मणा कृतेन

शुभेनाशुभेन वा न बाध्यते जन्ममरणादिजननेन न क्लेश्यते । तथा च समाधिप्रकरणे पातञ्जलसूत्रम्—'ततः क्लेशकर्मनिवृत्तिः' इति । केनापि पुरुषान्तरेण यन्त्रमन्त्रादिना वा न साध्यते साधयितुं शक्यते ॥ १०८ ॥

**न गन्धं न रसं रूपं न च स्पर्शं न निःस्वनम् ।**
**नात्मानं न परं वेत्ति योगी युक्तः समाधिना ॥१०९॥**

न गन्धमिति । समाधिना युक्तो योगी न गन्धं सुरभिमसुरभिं वा न रसं मधुराम्ललवणकटुकषायतिक्तभेदात् षड्विधं न रूपं शुक्लनीलपीतरक्तहरितकपिशचित्रभेदात्सप्तविधं न स्पर्शं शीतमुष्णमनुष्णाशीतं वा न निःस्वनं शङ्खदुन्दुभिजलधिजीमूतादिनिनादं बाह्यमाभ्यन्तरं वा न आत्मानं देहं न परं पुरुषान्तरं वेत्तीति सर्वत्रान्वेति । 'आत्मा देहे धृतौ जीवे स्वभावे परमात्मनि' इत्यमरः ॥ १०९ ॥

**चित्तं न सुप्तं नो जाग्रत्स्मृतिविस्मृतिवर्जितम् ।**
**न चास्तमेति नोदेति यस्यासौ मुक्त एव सः ॥ ११० ॥**

चित्तमिति । यस्य योगिनश्चित्तमन्तःकरणं न सुप्तम् । आवरकस्य तमसोऽभावात्त्रिगुणेऽन्तःकरणे यदा सत्त्वरजसी अभिभूय समस्तकरणावरकं तम आविर्भवति तदाऽन्तःकरणस्य विषयाकारपरिणामाभावात्तत्सुप्तमित्युच्यते । नो जाग्रत् इन्द्रियै-

रर्थग्रहणाभावात् । स्मृतिश्च विस्मृतिश्च स्मृतिविस्मृती ताभ्यां विवर्जितम् । वृत्तिसामान्याभावादुद्बोधकाभावाच्च स्मृतिवर्जितम् । विस्मृत्यनुकूलसंस्काराभावाद्विस्मृतिवर्जितम् । न चास्तं नाशमेति प्राप्नोति । संस्कारशेषस्य चित्तस्य सत्त्वात् । नोदेत्युद्भवति । वृत्त्यनुत्पादनात् । सोऽसौ मुक्त एव जीवन्मुक्त एव ॥ ११० ॥

**न विजानाति शीतोष्णं न दुःखं न सुखं तथा ।**
**न मानं नापमानं च योगी युक्तः समाधिना ॥ १११ ॥**

न विजानातीति । समाधिना युक्तो योगी शीतं च उष्णं च शीतोष्णम् । समाहारद्वन्द्वः । शीतमुष्णं वा पदार्थं न दुःखं दुःखजनकं परकृतं ताडनादिकं न सुखं सुखसाधनं सुरभिचन्दनाद्यनुलेपनादिकम् । तथा चार्थे । मानं परकृतं सत्कारं न अपमानमनादरं च न विजानातीति क्रियापदं प्रतिवाक्यमन्वेति ॥ १११ ॥

**स्वस्थो जाग्रदवस्थायां सुप्तवद्योऽवतिष्ठते ।**
**निःश्वासोच्छ्वासहीनश्च निश्चितं मुक्त एव सः ॥११२॥**

स्वस्थ इति । स्वस्थः प्रसन्नेन्द्रियान्तःकरणः । एतेन तन्द्रा-मूर्च्छादिव्यावृत्तिः । जाग्रदवस्थायामित्यनेन स्वप्नसुषुप्त्योर्निवृत्तिः । सुप्तवत् सुप्तेन तुल्यं कायेन्द्रियव्यापारशून्यो यो योगी

अवतिष्ठते स्थितो भवति । 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् । निःश्वासोच्छ्वासहीनः बाह्यवायोः कोष्ठे ग्रहणं निःश्वासः, कोष्ठस्थितस्य वायोर्बहिर्निःसारणमुच्छ्वासस्ताभ्यां हीनश्चावतिष्ठत इत्यत्रापि संबध्यते । स निश्चितं निःसंदिग्धं मुक्त एव । जीवन्मुक्तस्वरूपमुक्तं दत्तात्रेयेण—'निर्गुणध्यानसंपन्नः समाधिं च ततोऽभ्यसेत् । दिनद्वादशकेनैव समाधिं समवाप्नुयात् । वायुं निरुध्य मेधावी जीवन्मुक्तो भवेद् ध्रुवम् ॥' इति ॥ ११२ ॥

**अवध्यः सर्वशस्त्राणामशक्यः सर्वदेहिनाम् ।**
**अग्राह्यो मन्त्रयन्त्राणां योगी युक्तः समाधिना ॥११३॥**

अवध्य इति । समाधिना युक्तो योगी । सर्वशस्त्राणामिति संबन्धसामान्ये षष्ठी । सर्वशस्त्रैरित्यर्थः । अवध्यो हन्तुमशक्य इत्यर्थः । सर्वदेहिनामित्यत्रापि संबन्धमात्रविवक्षायां षष्ठी । अशक्यः सर्वदेहिभिः बलेन शक्यो न भवतीत्यर्थः । मन्त्रयन्त्राणां वशीकरणमारणोच्चाटनादिफलैर्मन्त्रयन्त्रैरग्राह्यः वशीकर्तुमशक्यः । एवं प्राप्तयोगस्य योगिनो विघ्ना बहवः समायान्ति । तन्निवारणार्थं तज्ज्ञानस्यापेक्षितत्वात्तेऽपि प्रदर्श्यन्ते । दत्तात्रेयः 'आलस्यं प्रथमो विघ्नो द्वितीयस्तु प्रकथ्यते । पूर्वोक्तधूर्तगोष्ठी च तृतीयो मन्त्रसाधनम् । चतुर्थो धातुवादः स्यादिति योगविदो विदुः ॥' इति । मार्कण्डेयपुराणे—'उपसर्गाः प्रवर्तन्ते

दृष्टा ह्यात्मनि योगिनः। ये तांस्ते संप्रवक्ष्यामि समासेन निबोध मे ॥ काम्याः क्रियास्तथा कामान्मनुष्यो योऽभि-वाञ्छति। स्त्रियो दानफलं विद्यां मायां कुप्यं धनं वसु ॥ देवत्वममरेशत्वं रसायनवयःक्रियाम्। मेरुं प्रयतनं यज्ञं जला-ग्यावेशनं तथा ॥ श्राद्धानां शक्तिदानानां फलानि नियमा-स्तथा। तथोपवासात्पूर्ताच्च देवपित्रर्चनादपि ॥ अतिथिभ्यश्च कर्मभ्य उपसृष्टोऽभिवाञ्छति। विघ्नमित्थं प्रवर्तेत यत्नाद्योगी निवर्तयेत्। ब्रह्मासङ्गि मनः कुर्वन्नुपसर्गैः प्रमुच्यते ॥' इति। पद्मपुराणे—'यदैभिरन्तरायैर्न क्षिप्यतेऽस्य हि मानसम्। तदाऽग्रे समवाप्नोति परं ब्रह्मातिदुर्लभम्'। योगभास्करे—'सात्त्विकीं धृतिमालम्ब्य योगी सत्त्वेन सुस्थिरः। निर्गुणं मनसा ध्यायन्नु-पसर्गैः प्रमुच्यते ॥ एवं योगमुपासीनः शक्रादिपदनिःस्पृहः। सिद्ध्यादिवासनात्यागी जीवन्मुक्तो भवेन्मुनिः ॥' इति। 'विस्तरस्य भिया नोक्ताः सन्ति विघ्ना ह्यनेकशः। ध्यानेन विष्णुहरयोर्वारणीया हि योगिना ॥' इति ॥ ११३ ॥

**यावन्नैव प्रविशति चरन्मारुतो मध्यमार्गे**
**यावद्बिन्दुर्न भवति दृढः प्राणवातप्रबन्धात्।**
**यावद्ध्याने सहजसदृशं जायते नैव तत्त्वं**
**तावज्ज्ञानं वदति तदिदं दम्भमिथ्याप्रलापः ॥११४॥**

अयोगिनां ज्ञानं निराकुर्वन् योगिनामेव ज्ञानं भवतीत्याह—यावदिति । मध्यमार्गे सुषुम्णायां चरन् गच्छन् मारुतः प्राणवायुः यावत् यावत्कालपर्यन्तं न प्रविशति प्रकर्षेण ब्रह्मरन्ध्रपर्यन्तं न विशति । ब्रह्मरन्ध्रं गतस्य स्थैर्याद्ब्रह्मरन्ध्रं गत्वा न स्थिरो भवतीत्यर्थः । सुषुम्णायामसंचरन् वायुरसिद्ध इत्युच्यते । तदुक्तममृतसिद्धौ—'यावद्धि मार्गगो वायुर्निश्चलो नैव मध्यगः । असिद्धं तं विजानीयाद्वायुं कर्मवशानुगम् ॥' इति । प्राणयति जीवयतीति प्राणः स चासौ वातश्च प्राणवातः तस्य प्रबन्धात्कुम्भकेन स्थिरीकरणाद्बिन्दुर्वीर्यं दृढः स्थिरो न भवति प्राणवातस्थैर्ये बिन्दुस्थैर्यमुक्तमत्रैव प्राक्—'मनःस्थैर्ये स्थिरो वायुस्ततो बिन्दुः स्थिरो भवेत्' इति । तदभावे त्वसिद्धत्वं योगिनः । उक्तममृतसिद्धौ—'तावद्बद्धोऽप्यसिद्धोऽसौ नरः सांसारिको मतः । यावद्भवति देहस्थो रसेन्द्रो ब्रह्मरूपकः ॥ असिद्धं तं विजानीयान्नरमब्रह्मचारिणम् । जरामरणसंकीर्णं सर्वक्लेशसमाश्रयम् ॥' इति । यावत्तत्त्वं चित्तं ध्याने ध्येयचित्तं न सहजसदृशं स्वाभाविकध्येयाकारवृत्तिप्रवाहान्नैव जायते नैव भवति प्राणवातप्रबन्धादिति देहलीदीपन्यायेनात्रापि संबध्यते । वायुस्थैर्ये चित्तस्थैर्यमुक्तममृतसिद्धौ—'यदाऽसौ म्रियते वायुर्मध्यमां मध्ययोगतः । तदा बिन्दुश्च चित्तं च म्रियते वायुना सह' । तदभावे

ह्यसिद्धत्वमुक्तममृतसिद्धौ—'यावत्प्रस्यन्दते चित्तं बाह्याभ्यन्तरवस्तुषु। असिद्धं तद्विजानीयाच्चित्तं कर्मगुणान्वितम्॥' इति। तावद्यज्ज्ञानं शाब्दं वदति कश्चित् तदिदं ज्ञानं कथं दम्भमिथ्याप्रलापः दम्भेन ज्ञानकथनेनाहं लोके पूज्यो भविष्यामीति धिया मिथ्याप्रलापो मिथ्याभाषणं दम्भपूर्वकं मिथ्याभाषणमित्यर्थः। प्राणबिन्दुचित्तानां जयाभावे ज्ञानस्याभावात्संसृतिर्दुर्वारा। तदुक्तममृतसिद्धौ—'चलत्येष यदा वायुस्तदा बिन्दुश्चलः स्मृतः। बिन्दुश्चलति यस्याङ्गे चित्तं तस्यैव चञ्चलम्॥ चले बिन्दौ चले चित्ते चले वायौ च सर्वदा। जायते म्रियते लोकः सत्यं सत्यमिदं वचः॥' इति। योगबीजेऽप्युक्तम्—'चित्तं प्रणष्टं यदि भासते वै तत्र प्रतीतो मरुतोऽपि नाशः। न वा यदि स्यान्न तु तस्य शास्त्रं नात्मप्रतीतिर्न गुरुर्न मोक्षः॥' इति। एतेन प्राणबिन्दुमनसां जये तु ज्ञानद्वारा योगिनो मुक्तिः स्यादेवेति सूचितम्। तदुक्तममृतसिद्धौ—'यामवस्थां व्रजेद्वायुर्बिन्दुस्तामधिगच्छति। यथा हि साध्यते वायुस्तथा बिन्दुप्रसाधनम्॥ मूर्च्छितो हरति व्याधिं वृद्धः खेचरतां नयेत्। सर्वसिद्धिकरो लीनो निश्चलो मुक्तिदायकः। यथाऽवस्था भवेद्बिन्दोश्चित्तावस्था तथा तथा॥' ननु 'योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया। ज्ञानं कर्म च भक्तिश्च

नोपायोऽन्योऽस्ति कुत्रचित् ॥' इति भगवदुक्तास्त्रयो मोक्षोपायाः, तेषु सत्सु कथं योग एव मोक्षोपायत्वेनोक्त इति चेन्न, तेषां योगाङ्गेष्वन्तर्भावात् । तथा हि—'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति श्रुत्या परमपुरुषार्थसाधनात्मसाक्षात्कारहेतुतया श्रवणमनननिदिध्यासनान्युक्तानि । तत्र श्रवणमनने नियमान्तर्गते स्वाध्यायेऽन्तर्भवतः । स्वाध्यायश्च मोक्षशास्त्राणामध्ययनम् । स च तात्पर्यार्थनिर्णयपर्यवसायो ग्राह्यः । तात्पर्यार्थनिर्णयश्च श्रवणमननाभ्यां भवतीति श्रवणमननयोः स्वाध्यायेऽन्तर्भावः । नियमविवरणे याज्ञवल्क्येन 'सिद्धान्तश्रवणं प्रोक्तं वेदान्तश्रवणं बुधैः' इति स्पष्टमेव श्रवणस्य नियमान्तर्गतिरुक्ता । 'अधीतवेदं सूत्रं वा पुराणं सेतिहासकम् । पदेष्वध्ययनं यश्च सदाभ्यासो जपः स्मृतः' इति युक्तिभिरनवरतमनुचिन्तनलक्षणस्य सदाभ्यासरूपस्य मननस्यापि नियमान्तर्गतिरुक्ता । विजातीयप्रत्ययनिरोधपूर्वकसजातीयप्रत्ययप्रवाहरूपस्य निदिध्यासनस्य उक्तलक्षणे ध्यानेऽन्तर्भावः । तस्यापि तत्परिपाकरूपसमाधिनाऽऽत्मसाक्षात्कारद्वारा मोक्षहेतुत्वमीश्वरार्पणबुद्ध्या निष्कामकर्मानुष्ठानलक्षणस्य कर्मयोगस्य 'तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः' इति पतञ्जलिप्रोक्ते नियमान्तर्गते क्रियायोगेऽन्तर्भावः । तत्र तप उक्तमीश्वर-

गीतायाम्—'उपवासपराकादिकृच्छ्रचान्द्रायणादिभिः। शरीरशोषणं प्राहुस्तापसास्तप उत्तमम्॥' इति। स्वाध्यायोऽपि तत्रोक्तः—'वेदान्तशतरुद्रीयप्रणवादिजपं बुधाः। सत्त्वशुद्धिकरं पुंसां स्वाध्यायं परिचक्षते॥' इति। ईश्वरप्रणिधानं च तत्रोक्तम्—'स्तुतिस्मरणपूजाभिर्वाङ्मनःकायकर्मभिः। सुनिश्चला भवेद्भक्तिरेतदीश्वरपूजनम्॥' इति। क्रियायोगश्च परम्परया समाधिनाऽऽत्मसाक्षात्कारद्वारैव मोक्षहेतुरिति समाधिभावनार्थः। 'क्लेशतनूकरणार्थश्च' इत्युत्तरसूत्रेण स्पष्टीकृतं पतञ्जलिना। भज्यते सेव्यते भगवदाकारमन्तःकरणं क्रियतेऽनयेति भक्तिरिति करणव्युत्पत्त्या 'श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्। अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्॥' इति नवधोक्ता साधनभक्तिरभिधीयते। तस्या ईश्वरप्रणिधानरूपे नियमेऽन्तर्भावः। तस्याश्च समाधिहेतुत्वं चोक्तं पतञ्जलिना—'ईश्वरप्रणिधानाद्वा' इति। ईश्वरविषयकात्प्रणिधानाद्भक्तिविशेषात्समाधिलाभः समाधिफलं भवतीति सूत्रार्थः। भजनमन्तःकरणस्य भगवदाकारतारूपं भक्तिरिति भावव्युत्पत्त्या फलभूता भक्तिरभिधीयते। सैव प्रेमभक्तिरित्युच्यते। तल्लक्षणमुक्तं नारायणतीर्थैः—'प्रेमभक्तियोगस्तु ईश्वरचरणारविन्दविषयकैकान्तिकात्यन्तिकप्रेमप्रवाहोऽविच्छिन्नः' इति। मधुसूदनसरस्वतीभिस्तु 'द्रवीभावपूर्विका मनसो भगव-

दाकारतारूपा सविकल्पकवृत्तिर्भक्तिः' इति। तस्यास्तु 'श्रद्धाभक्तिध्यानयोगादवेहि' इति श्रुतेः, 'भक्त्या मामभिजानाति' इति स्मृतेश्च आत्मसाक्षात्कारद्वारा मोक्षहेतुत्वम्। भक्तास्तु सुखस्यैव पुरुषार्थत्वाद्दुःखासंभिन्ननिरतिशयसुखधारारूपा प्रेमभक्तिरेव पुरुषार्थ इत्याहुः। तस्यास्तु संप्रज्ञातसमाधावन्तर्भावः। एवं च अष्टाङ्गयोगातिरिक्तं किमपि परमपुरुषार्थसाधनं नास्तीति सिद्धम् ॥ ११४ ॥

**इति श्रीसहजानन्दसंतानचिन्तामणिस्वात्मारामयोगीन्द्रविरचितायां हठप्रदीपिकायां समाधिलक्षणं नाम चतुर्थोपदेशः ॥ ४ ॥**

**मूलश्लोकसंख्या ॥ ३८३ ॥ श्रीकृष्णार्पणमस्तु ॥**

ग्राह्यमेव विदुषां हितं यतो भाषणं समयदर्श्यसंस्कृतम्।
रक्ष गच्छति पयो न लेहितं ह्यम्ब इत्यभिहितं शिशोर्यथा ॥ १ ॥
सदर्थद्योतनकरी तमःस्तोमविनाशिनी।
ब्रह्मानन्देन ज्योत्स्नेयं शिवाङ्घ्रियुगलेऽर्पिता ॥ २ ॥

इति श्रीहठप्रदीपिकाव्याख्यायां ब्रह्मानन्दकृतायां समाधिनिरूपणं नाम चतुर्थोपदेशः ॥ ४ ॥ टीकाग्रन्थसंख्या ॥ २४५० ॥



Printed by A. K. Sitarama Shastri, at the Vasanta Press, Adyar, Madras, India.

# THE T.P.H. ORIENTAL SERIES

Sri Bhagavad-Gita: Sanskrit Text and English Translation by Dr. Annie Besant and S'rī Bhagavān Dās, M.A. This Edition contains a word for word translation and an introduction to Sanskrit Grammar. Indian Edition Rs. 2-8; Foreign Edition Rs. 3-8; Presentation Edition—Superior Leather Gilt Rs. 8.

The Yoga Sutras of Patanjali: Sanskrit Text and English Translation by Prof. M. N. Dvivedī. It contains also notes drawn from various authoritative sources, *viz.*, the Bhāṣyas of Vyāsa, Vācaspatimis'ra, Bhoja and Rāmānanda Sarasvatī, and the Yogavārttika of Vijñāna Bhikṣu; besides there is an introduction to its study by George C. Williams. Indian Edition Re. 1-4; Foreign Edition Re. 1-12.

The Twelve Principal Upanishads: Sanskrit Text, English Translation and notes from the commentaries of S'rī S'aṅkarācārya and the gloss of Ānandagiri in THREE Volumes.

Vol. I: Contains nine Upaniṣads, *viz.*, Īs'a, Kena, Kaṭha, Pras'na, Muṇḍaka, Māṇḍūkya, Taittirīya, Aitareya, and S'vetās'vatara Upaniṣads, translated by that eminent Orientalist, Dr. E. Roer. Prof. M. N. Dvivedī has contributed a scholarly preface to these volumes. Indian Edition Rs. 4; Foreign Edition Rs. 5.

Vol. II: Bṛhadāraṇyakopaniṣad, translated by Dr. E. Roer. Indian Edition Rs. 6; Foreign Edition Rs. 7.

Vol. III: Chāndogya and Kauṣītaki-Brāhmaṇa Upaniṣads: Text, translated by Rāja Rājendralāl Mitra and Prof. E. B. Cowell, M.A., respectively. Indian Edition Rs. 5; Foreign Edition Rs. 6.

Yogasarasangraha of Vijñānabhikṣu. Text in Devanāgarī, English Translation by Mahāmahopādhyāya Dr. Gaṅgānātha Jha, M.A., F.T.S. Revised Indian Edition Rs. 2-8; Ex. Edition Rs. 3-8.

Gheranda Samhita: A treatise on Haṭha Yoga. Text and Translation by Sris Candra Vasu. Indian Edition Rs. 2; Ex. Edition Rs. 2-8.

Brahmasutrabhashya of S'rī S'aṅkarācārya with Bhamati of Vācaspati Mis'ra for the Catussutri. (The first four of the Vedānta-sūtras of Bādarāyaṇa.) Text in Devanāgarī, English Translation with Introduction and Notes by Prof. S. S. Sūryanārāyaṇa S'āstrī, M.A., B.Sc. (Oxon.), Bar-at-Law, and Prof. C. Kunhan Rājā, M.A., D.Phil. (Oxon.) Indian Edition Rs. 8; Ex. Edition Rs. 10.

Hatha-Yoga Pradipika of Svātmarāma Svāmin with the commentary of Brahmānanda. Text and translation with Notes by Yogī Srinivasa Iyengar, B.A. Indian Edition Rs. 3; Ex. Edition Rs. 4.

Manameyodaya: A Primer on Mīmāṁsā by Nārāyaṇa Bhaṭṭa; Text in Devanāgarī, English translation, with Introduction and Notes by Prof. C. Kunhan Rājā, M.A., D.Phil. (Oxon.), Head of the Department of Sanskrit and Prof. S. S. Sūryanārāyaṇa S'āstrī, M.A., B.Sc. (Oxon.), Bar-at-Law, Head of the Department of Philosophy, University of Madras. Indian Edition Rs. 5; Ex. Edition Rs. 6.

---

**THEOSOPHICAL PUBLISHING HOUSE**

**Adyar, Madras, India**